श्रीहरिकृष्णनिबन्धमणिमालायाः
प्रथमो मणिः ।

# मूलरामायण-भारतीयशीलनिरूपणाध्यायौ

पं० श्रीगङ्गाधरमिश्रकृतया सुधाटीकया समलंकृतौ ।



प्रकाशकः—
श्रीहरिकृष्णनिबन्धभवनम्
बनारस-सिटी ।

श्रीः ।

श्रीहरिकृष्णनिबन्धमणिमालायाः प्रथमो मणिः ।

श्रीमहर्षिवाल्मीकि-व्यासाभ्यां निर्मितौ

# मूलरामायण-भारतीयशीलनिरूपणाध्यायौ ।

मिथिलादेशान्तर्गत-चयनपुरनिवासिना
काव्यतीर्थ-ज्योतिषाचार्यादिपदवीधारिणा
मिश्रोपनामकेन श्रीगङ्गाधरशर्मणा
सुधाटीकया समलङ्कृतौ, तेनैव संशोधितौ च ।

"वाराणसी"स्थ-श्रीहरिकृष्णनिबन्धभवनद्वारा
प्रकाशितौ ।





सम्वत् १९८४ ।

# नूतनपुस्तकसूचीपत्रम् ।

रु० आ०

(१) मुहूर्तचिन्तामणिः—सोपपत्तिपीयूषधारायुतः ३—०
(२) मुहूर्तचिन्तामणिः—सोपपत्तिप्रमिताक्षरायुतः २—०
(३) बृहज्जातकम्—श्रीमद्भट्टोत्पलकृतसंस्कृतटीकोपपत्तिसहितम् २—०
(४) ताजिकनीलकण्ठी—संस्कृटीकोपपत्तिसहिता १—४
(५) सरलत्रिकोणमितिः—नूतनवासनासहित—चापीयत्रिकोणगणित—नवीनसिद्धान्त-द्वियुक्पद—लघुरिक्थ—सिद्धान्तसहिता ३—०
(६) गोलीयरेखागणितम्—विकाशिकाटीकया परिशिष्टेन गोलबोध—विशेषोक्तगोलीयरेखागणित—प्रश्नाद्यैश्च सहितम् ०—१२
(७) प्रतिभाबोधकम्—संस्कृतटीकासहितम् ०—८
(८) वास्तवचन्द्रशृङ्गोन्नतिसाधनम्—संस्कृतटीकासहितम् १—१२
(९) रेखागणितस्यैकादश-द्वादशाध्यायौ—ज्योतिर्विद्वरश्रीकृष्ण-दत्तशर्मकृतटीकासहितौ सविशेषटिप्पणी-समलङ्कृतौ ०—१२
(१०) मुद्राराक्षसनाटकम्—भावबोधनीटीका-विस्तृतसमालोचनास० २—०
(११) शिशुपालवधं सटीकं—आदितः सर्गद्वयात्मकं ०—५
(१२) शिशुपालवधं सटीकं—आदितः सर्गत्रयात्मकं ०—७
(१३) फक्किकारत्नमञ्जूषा—स्त्रीप्रत्ययान्तो भागः २—०
(१४) फक्किकारत्नमञ्जूषा—कारकादिकृदन्तान्तो भागः २—०
(१५) उभयाभावादिवारकपरिष्कारः—संस्कृतटीकासहितः ०—१२
(१६) न्यायदर्शनं—विश्वनाथवृत्ति—टिप्पणी-विवृतियुतम् . १—०
(१७) न्यायकुसुमाञ्जलिः—हरिदासीटीका-टिप्पणीभ्यां सहितः ०—७
(१८) तर्कसंग्रहः—न्यायबोधिनी-पदकृत्य—विरलाख्य-टीकात्रयोपेतः ०—६
(१९) वाल्मीकिरामायणसुन्दरकाण्डम्—( मूल-रेशमी-गुठका ) १—०
(२०) शिशुबोधः—सविशेष-टिप्पणी सहितः ०—३
(२१) बगलामुखीस्तोत्रम् ०—१
(२२) नाडिदत्तपञ्चविंशतिका ०—१
(२३) धार्मिकलक्षणवर्णनकाव्यम् ०—६
(२४) चतुर्विधपुरुषार्थविचारः ०—८

अस्मत्कार्यालयात्सर्वविषयकाणि पुस्तकानि सर्वथा मनोहराणि समुचित-मूल्येनैवातीवसावधानतया 'वी० पी०' द्वारा प्रेष्यन्त इत्यास्वादयन्तु सुधियः ।

*विविधपुस्तकप्राप्तिस्थानम्——*

**श्रीहरिकृष्णनिबन्धभवनम्-बनारस-सिटी ।**

# भूमिका ।

साम्प्रतं भारते प्रचलितासु यावतीषु सकलसंस्कृतपरीक्षासु प्रथमकक्षायामुत्सुकानां छात्राणां यथाऽक्लेशेनैहिकामुष्मिकसुखसाधनोचितज्ञानं भवेत्तथा तन्नियमविधायकैर्विज्ञवरैर्भूयो विचार्य पाठ्यपुस्तकत्वेन निर्धारितेषु पुस्तकेषु साधारणतया मूलरामायणम् भारतीय-शीलनिरूपणाध्याय इमे अपि वर्त्तेते ।

तत्र तावदादिमस्य मूलरामायणस्य वैशिष्ट्यं केन शब्देन वर्णयन्नानृण्यं प्राप्नोमीति प्रयोक्तुं सरस्वतीवदनेनापि जनेन प्रायो न शक्यते, का कथा मादृशस्याल्पमतेः ।

तथाऽपि वस्तुतो भूमौ न च तादृशः प्रदेशः, न च तादृशी जातिः न च तादृशी भाषा न च तादृशो विभिन्नोऽपि धर्मः, न च तादृशो-जनसमाजो वर्त्तते यत्र, रामायणेन निजसाम्राज्यं न विस्तारितम् । किमधुना बहुना नानाभिनवधर्मैः स्वस्वाधिपत्यप्रचारणायोपद्रुतस्य सनातनधर्मस्यास्ति चेत्कोऽपि रक्षकस्तदा सकलदुश्चारित्र्यहरणं योगिशरणं रामायणमेकैकमिति हस्तावुत्थाप्योच्चैर्वक्तुं शक्यते ।

तादृशस्य वाल्मीकिप्रणीतस्य तस्य निदानरूपः प्रकृतग्रन्थ एव मूलरामायणसंज्ञः श्रीमद्देवर्षिणा नारदेन महर्षये आदिकवये वाल्मीकये उपदिष्टः ।

कस्यां कस्यां दशायां केन केन रूपेण व्यवहर्त्तव्यमिति लोकरीतिनीतिजिज्ञासिनां दुर्व्यवहारहालाहलमूर्च्छितानामिदमेव शिक्षापीयूषपूरम् । मोक्षार्थिनामिदमेव चित्स्थानसोपानम् । अबान्धवानामिदमेव बन्धुः । दरिद्राणामिदमेवाक्षयमैश्वर्यम् । अन्धानामेतदेव जाग्रज्ज्योतिरूपं चक्षुः । कामादिशत्रूणां परिभवायैतदेव ब्रह्मास्त्रम्, अज्ञानतिमिरान्धानामेतदेवामृताञ्जनम् । अनुत्साहानामुत्साहवर्धकमिदमेव ।

अथ द्वितीयन्तु विद्यते भारतीयशान्तिपर्वणः चतुर्विंशत्यधिकशततमोऽध्यायः । तत्र तु सकलविधधर्मसाधनप्रधानस्य निखिलजग-

द्वशीकरणकरस्य शीलस्य लक्षणमस्ति, यच्छिक्षणेन शिशवः स्पृहणीयाचरणपरायणा भवन्तीति विदित्वैव सकलशिक्षाप्रधानग्रन्थस्य सारभूतं पुस्तकद्वयं पाठ्यपुस्तकत्वे नियुक्तम् ।

तद्बहुभिर्बहुत्र मुद्रापितेनापि यादृशेन भाव्यं, नहि तथा भूतमवलोक्य संस्कृतपुस्तकसंमुद्रणार्पितयावद्वित्तप्राणोत्साहेन श्रीहरिकृष्णदासगुप्तमहाशयेन निवेदितोऽहं तदुक्तपुस्तकद्वयमन्वयादिभिः, तत्तन्निर्गतशिक्षाभिः प्रश्नैश्च कतिपयैः सरलेतिहासैश्च संयोज्य मुद्रणार्थं तस्मै सकलाधिकारं समर्पितवानस्मि । तेन च महता परिश्रमेण भूरि वित्तं व्ययं कृत्वा संमुद्रय छात्राणामुपकाराय प्रकाशितम् ।

तत्र यथामति सावधानेन संशोधितमपि यत्र यत्र सुलभमानवदोषेण त्रुटिस्तिष्ठति, तान्तां कृपया विद्वद्भिः संशोध्याध्यापनसमये शिष्यभ्रमं निराकृत्य मत्परिश्रमं सफलं कुर्वन्त्विति तेभ्यः प्रार्थयते—

नम्रनिवेदकः—

श्रीगङ्गाधरमिश्रः (मैथिलः)



# अथ रामायणस्य पात्रपरिचयः ।

(१) दशरथः—रघुवंशीयः सुरेन्द्रस्पर्द्धी महाप्रतिष्ठो भूपतिविशेष आसीत् ।

(२) कौसल्या—सुमित्रा कैकेयीति तिस्रः स्त्रियो दशरथस्यासन् । तत्र कौसल्या प्रथमा, सुमित्रा मध्यमा, कैकेयी लघ्वी आसीत् ।

(३) रामः—कौसल्याया आत्मजः, सकलसद्गुणशाली विष्णोः साक्षादवतारोऽसुरदानवसंहरणाय भूमाववतीर्णोऽनुपमरूप आसीत् ।

(४) भरतः—कैकेय्याः पुत्रः परमपवित्रचरित्रो महात्माऽऽसीत् ।

(५) लक्ष्मणः—सुमित्रापुत्रो रामस्यानुपमो भक्तोऽतिशौर्यवान् गौरवर्णश्चासीत् ।

(६) शत्रुघ्नः—सुमित्रापुत्रो भरतानुरक्तः परमसहिष्णुरासीत् ।

(७) जनको—मिथिलाधिपतिः सकलशास्त्रमर्मज्ञो राजर्षिरासीत् ।

(८) वसिष्ठो—रघुवंशीयानां कुलगुरुः परमोच्चविचाराचारवान् महर्षिः ।

(९) सीता—परमपवित्रा जनकस्य पालितकन्याऽनिर्वचनीयसौन्दर्ययुक्ता अवर्णनीयपातिव्रत्यसमन्विताऽऽसीत् ।

(१०) लक्ष्मणस्योर्मिला, भरतस्य माण्डवी, शत्रुघ्नस्य श्रुतकीर्तिर्दयिताऽऽसीत् ।

(११) गुहः—शृङ्गवेरपुरनिवासी निषादजातिर्नौकावहनवृत्त्या जीवनयात्रां निर्वाहयन्नासीत् ।

(१२) भारद्वाजो—गङ्गादक्षिणतटे प्रयागेऽवसत् । अद्यापि वर्त्तते तदाश्रमः । अयं महर्षिणामग्रगण्यः परममाननीयस्तदानीमासीत् ।

(१३) सुमन्त्रो—दशरथस्य सारथिरेव नहि, अपि तु मन्त्री अपि आसीत् ।

(१४) विश्वामित्रः—पूर्वं क्षत्रिय आसीत् दैवादेकदा नन्दिन्यर्थे वसिष्ठेन सह तस्य विरोधे जाते, वसिष्ठप्रयुक्तैकब्रह्मदण्डवशान्नाशिते सकलसैन्ये राज्यं त्यक्त्वा ब्रह्मतेजोऽधिगन्तुमत्युग्रं तपस्तेपे, तेनादौ राजर्षिस्तदनु ब्रह्मर्षिरपि संवृत्तः । अयमेव पूर्वं वसिष्ठविरोधेन हरिश्चन्द्रस्य राज्यादिकं नाशितम् ।

(१५) सुग्रीवः—वानराणां राजा, बालिभ्राता वीरवरो रामस्य परमः सखाऽऽसीत्।

(१६) बालिः—सुग्रीवस्य ज्येष्ठो भ्राताऽद्भुतपराक्रमी पूर्वमयमेव वानराधिपतिरासीत्। अयमनुजवधूगामी, तेनाततायित्वेन रामेण हतः।

(१७) हनूमान्—वायुपुत्रोऽमितबलबुद्धिशाली परमस्वामिभक्तोऽसाध्य-साधको रामस्यानुपमभक्तियुक्तो रामायणप्रधानपात्रमासीत्।

(१८) जटायुः—सम्पातिगृध्रस्यानुजो महापराक्रमी आसीत्।

(१९) सम्पातिः—गृध्रोऽतिबलवान् पक्षी आसीत्। अस्योपदेशेनैव हनूमान् सीतान्वेषणाय लङ्कां गतवान्।

(२०) कवन्धो—गन्धर्वविशेषः......शापाद्राक्षसत्वं गतः।

(२१) शवरी—भिल्लजातिः परमरामभक्तिनी आसीत्।

(२२) जाम्बवान्—ऋक्षराजोऽद्भुतपराक्रमी आसीत्।

(२३) रावणो—हि राक्षसानामधिपतिः सुरासुरविजयी महान् विद्वान् ब्राह्मणवर्णोऽभिचारनिरतोऽत्याचारनिपुणः शैव आसीत्।

इति संक्षेपतः पात्रपरिचयः।



# अथ मूलरामायणकथानकम् ।

पुरैकदा मुनिवरस्तपस्वी वाल्मीकिः सततंतपोवेदाध्ययननिरतं देवर्षिप्रवरं नारदं समभिगम्य 'अधुना इह मर्त्यलोके सकलगुणगणालंकृतः, सत्योक्तिप्रयोक्ता, कृतज्ञः निखिलसदाचारविचारवान्, सर्वप्राणिकल्याणकरणधुरीणः, सकलनिगमागमनिष्णातमानसः, अजेयविक्रमवाँश्चातिरमणीयाकारः, जितकामक्रोधप्रभृतिदोषः, को जनोऽस्ती'-ति मे कृपया कथय, यतस्त्वमेव त्रैलोक्यसमाचारविज्ञोऽसीति पृष्टवान् ।

नारदोऽपि वाल्मीकेः परमां जिज्ञासां निशम्य तं प्रत्युवाच । चेत्तव तादृशजनज्ञानाय विद्यते एतावती इच्छा, तदा सावधानो भूत्वा शृणु, यद्यपि त्वया ये ये गुणा वर्णितास्ते त्वेकस्मिन् जने दुर्लभाः सन्ति, तथापि कियद्दिनात्तथाविधोऽभूतपूर्वः पुरुषविशेषः समजनि भूमौ ।

स चायोध्यायामिक्ष्वाकुवंशीयः सकललोकविदितोऽवर्णनीयविद्याबलबुद्धिविभवः, महाराज*दशरथस्य ज्येष्ठः पुत्रो विद्यते,

* दशरथस्य तिस्रः पत्न्यः कौसल्या सुमित्रा कैकेयीति नाम्न्य उत्तरोत्तरं लघ्व्यः आसन् । तासां ज्येष्ठायाः कौसल्यायाः पुत्रो रामः, मध्यमायाः सुमित्रायाः लक्ष्मणशत्रुघ्नौ, कनिष्ठायाः कैकेय्या भरतः, एवं चत्वारस्तनयास्तेषु सर्वज्येष्ठो रामस्तदनुजो भरतस्तदनुजो लक्ष्मणस्ततः शत्रुघ्न एवं तेषां जन्मक्रमोऽभूत् । ते यदाऽशेषशास्त्रशस्त्रशिक्षासु प्रवीणा बभूवुस्तदा स्वयज्ञविघ्नविघाताय विश्वामित्रो महाराजदशरथस्य समीपमागत्य रामलक्ष्मणौ किंचित्कालार्थं याचितवान् ।

ततः पुत्रप्रेमपरवशं दशरथं नानाहेतुमद्भिर्वचोभिः सन्तोष्य, तेन राजर्षिणा रामलक्ष्मणौ स्वाश्रममानीतौ, तत्र तु तौ सुनिशितैः शरैः सन्ताड्य ताडकां, विक्षेपणास्त्रेण प्रक्षिप्य मारीचं दक्षिणक्षाराब्धेर्दक्षिणतटे, तदनुयायिनः शमनभवनस्यातिथीन् विधाय, एवं तस्य यज्ञविघ्नान्निरस्य, तदनुग्रहेण तत एव दिव्यास्त्रसमूहान् सरहस्यान् शिक्षयित्वा, तदनुरोधेन तेनैव सह मिथिलेश्वरस्य धनुर्यज्ञावलोकनाय मिथिलाभिमुखं प्रस्थितौ ।

यस्य विततकपाटमिव महद्विस्तृतं वक्षस्थलम्, आजानुलम्बिनौ परिघोपमौ बाहू, कर्णान्तदीर्घे रक्तान्ते लोचने, छत्राकारं शिरः, अर्धचन्द्रवल्ललाटः, कमलकोमलौ करचरणौ, गजसिंहगमनमिव गमनम्, दूर्वाश्यामः, सम्मिलितसकलाङ्गावयवः, दृढप्रतिज्ञः, प्रजाहितनिरतः, शत्रुसूदनश्च साधुसुधीजनैरभिगतः, गाम्भीर्ये समुद्र इव, धैर्ये हिमालय इव, वीर्ये विष्णुरिव, रूपे चन्द्र इव, क्रोधे प्रलयान्तक इव, क्षमया धरणीव, दाने कुबेर इव, सत्ये धर्म इवास्ति।

ईदृशं ज्येष्ठपुत्रं रामं, प्रजानाममात्यादीनां विचारेण, स्त्रोत्कण्ठानिवृत्त्यै चानुपस्थितेऽपि भरते ततो रामाभिषेकविघ्नमालक्ष्य, झटिति यौवराज्येन संयोक्तुमैच्छत्तज्जनको महाराजो दशरथः।

परन्तु तदानीमेव 'चेद्रामोऽयोध्यायां नृपतिर्भूत्वा तिष्ठेत, तदा भूभारभूतानां विराधकबन्धखरदूषणादीनां, तथा च लङ्कानिवासिनां दानवानां विनाशानुपपत्त्या संसारस्यासमय एव संहारसंभावनया, दैवलीलया मन्थरामुखेन कैकेय्याः स्वार्थान्धा बुद्धि जाता, ततस्तया पौर्विकं देवासुरसमरोपलब्धं वरद्वयं स्मृत्वा, तयोरेकेण रामस्य चतुर्दशवर्षावधि वनवासः, द्वितीयेन 'मत्पुत्रो भरतो राजा भवतु' इति दशरथं याचितवती।

ततो दशरथः सर्वथा स्वेच्छाप्रतिकूलामपि तदाकस्मिकदुर्घटनां विज्ञाय सत्यपालनव्रतपरवशो भूत्वा रामं वनायाज्ञापितवान्।

रामोऽपि तमसामयिकं सहसाऽद्भुतं वृत्तं श्रुत्वाऽपि पितुः प्रतिज्ञां पालयन् प्रमुदितचित्त एव, 'एतावान् चतुर्दशवर्षात्मकः कालः स्वपन्त्यास्ते गमिष्यति, अतो मां पुत्रप्रेमपरवशतया मा गृहाण'। इत्यादिभिः आश्वास्य, सीतामपि तन्निवेद्य मुनिवेषेण वनं प्रस्थितुं प्रवृत्तः।

परन्तु सीता महता दुराग्रहेण पातिव्रतपालनधिया; लक्ष्मणोऽ

---

तत्र मार्गे नानाभूतनरपतिनगरविषयिणीर्विविधा आख्यायिका आकर्णयन्तौ, गौतमाश्रमतटवर्त्तिन्या इन्द्रसंपर्कदोषहेतुकपतिशापेन शिलात्मकायास्तत्पत्न्या अहल्याया आश्रमं गत्वा, तां स्वचरणपङ्कजरजःपुञ्जसंस्पर्शेन निष्पापां विधाय जनकपुरमुपागतौ, तत्र रामो देवदानवमानवेन्द्रैरप्यचाल्यं हरचापमाकृष्य, जनकराजप्रतिज्ञां परिपाल्य, तत्कन्यकया करग्रहं कृत्वा स्वराजधानीमयोध्यामनुजग्मतुः। अतः परं मूले विद्यते कथा।

पि भ्रातृभक्त्या तेनैव सह प्रतस्थे । ततः सहजजराजर्जरस्तत्काल-खेदजनकदुर्घटनातिखिन्नदेहो महाराजो दशरथोऽपि किञ्चिद्दूरं तमनुगतः । अयोध्यावासिनो जनास्तु 'रामेण साकमेव वने वत्स्याम'-इति तथा यतो रामो गमिष्यति तत्रैव वयं गमिष्यामः-इति धियाऽतिदूरं गताः ।

परन्तु तान्निशाशेषे गौतमीतटे निद्रितानेव विहाय, सुमन्त्रेण प्रेर्यमाणे स्यन्दने सीतारामलक्ष्मणाः समारुह्य गङ्गातटनिकटवर्त्ति शृङ्गवेरपुरं प्राप्ताः । तत्र निषादाधिपं गुहनामानं सङ्गम्य, सह स्थातुं भृशं प्रार्थयन्तमपि सुमन्त्रं पित्रादीनां रक्षार्थं व्यसर्जयत् ।

ततो गुहेन सह सानुरागमालापं कृत्वा, तदुद्योगेन गङ्गामुत्तीर्य, भरद्वाजस्याश्रममागत्य, संगम्य च तदाज्ञया चित्रकूटमेव वासार्थं प्रस्थिताः । तत्र गत्वैकं सुरुचिरं पर्णकुटीरं निर्माय, सानन्दमितस्ततो दिवा भ्रमन्तो निशायां तस्मिन् न्यवसन् ।

अथायोध्यां प्रतिनिवृत्तं, रामलक्ष्मणाभ्यां विहीनमेकाकिनं सुमन्त्रमालोक्य, दुःसहसुतविरहानलसंतप्तचित्तो दशरथः 'हा राम !!! हा सीते !!, हा लक्ष्मण !' इति विलपन् स्त्रीजितसुखमनुभवन् प्राणं तत्याज ।

ततो वसिष्ठजाबालिप्रमुखैर्गुरुजनै राज्यमराजकं ज्ञात्वा तद्राज्यकार्यप्रचलनाय, तथा च तत्पारलौकिकक्रियासम्पादनाय च मातुलकुलात्समानीतो भरतो राज्यभारवहनार्थं साग्रहमनुज्ञातोऽपि सखेदं स्वजननीं नितरां परिभर्त्स्य, गुरुजनैर्मातृवर्गैश्च सह रामप्रत्यानयनाय चित्रकूटं प्रस्थितः ।

तत्र गत्वा सकरुणं सानुनयं साग्रहं च राज्यभारवहनाय बहुभिर्हेतुमद्भिर्वाग्भिर्भ्रातृभक्तो भरतः सपत्नीकं रामं सप्रणामं याचितवान् ।

ततोऽतिप्रियस्यापि तस्य निवेदनं निशम्य रामः पितुरादेशपालनार्थं भरताग्रहं न स्वीकृतवान् । परन्तु राज्यभारनिर्वाहार्थं स्वप्रतिनिधिरूपे काष्ठपादुके भरताय दत्वाऽप्रतिभं भरतं निवर्त्तयामास ।

ततो भरतोऽपि अन्ततो गत्वा, ते अपि गृहीत्वा, ततो निवृत्य 'नाहं रामं विनाऽयोध्यां गमिष्यामीति पणं कृत्वा, मुनिवेषं धृत्वाऽयोध्यातो दक्षिणस्यां दिशि क्रोशान्तरिते नन्दिग्रामे स्वनिवासमक-

रोत्। तत्र तत्पादुकयो राज्यभारं समर्प्य पश्चात् स्वयं प्रजापालनं कृतवान्।

अथ चित्रकूटे भ्रातृपत्नीभ्यां सहितो रामः पुनः स्वदेशीयजनानामागमनशङ्कया वासमनिच्छन् ततो नातिदूरे दण्डकारण्यं प्रविश्य तत्रैव वासस्थानं कृतवान्।

तत्र तु एकदाऽद्भुतं विराधं हत्वा, ततः शरभङ्गं सुतीक्ष्णमगस्त्यं तद्भ्रातरञ्च सङ्गम्य ददर्श। अथागस्त्याश्रमं गत्वा तेन सादरं दानवेभ्यो-दरदूरीकरणायार्पितान् शराशनासितूणीरान् जग्राह। तत एकदा तैः सह वसतो रामस्यान्तिकं, दानवानां नाशाय ऋषयो मुनयश्च समागताः। रामोऽपि 'उद्दण्डा अवश्यं दण्डनीयाः'—इति तेषां वचोऽङ्गीकृतवान्।

अथ तेनैवादेशेन शूर्पणखा दैवाद्रामालौकिकरूपसौन्दर्यं विलोक्य तत्कालं कन्दर्पदर्पपराभूता स्वपाणिग्रहाभिलाषं तस्मै न्यवेदयत्। तच्छ्रुत्वा रामः 'अहं कृतदारोऽस्मि मदनुजो लक्ष्मणोऽविवाहितोऽस्ति, तेन तमेव स्वोचितं वरं कुरुष्व' इति तामब्रवीत्। ततस्तया लक्ष्मणान्तिकं गत्वा लक्ष्मणं प्रति स्वेच्छा प्रकटीकृता। ततस्तदिच्छां विदित्वा लक्ष्मणस्तामुवाच। अयि सुन्दरि! अहं तस्य रामस्य किङ्करोऽस्मि, अतो मम पत्नी अपि तत्किङ्करी एव भविष्यति। तेन मत्पाणिग्रहेण सदैव त्वया सहजक्लेशदशया पराधीनदशया भाव्यम्। अतस्तमेव भूयः प्रार्थय, इत्युक्ता नाशितानेकमखा शूर्पणखा रामान्तिकं गत्वा पुनः पूर्वप्रार्थनामकरोत्।

तन्निशम्य रामो नाङ्गीचकार। ततः 'यतोऽस्य विद्यते भार्या अतो मां न गृह्णाति, तेन तावदस्य गृहिणी एव मारणीया, तदनु स्त्रीरहितो ध्रुवमेव ग्रहीष्यति मां' इति तर्केण सीतां भक्षणार्थं धाविता। एवं तदत्याचारकरणोद्यतां तामवलोक्य, सत्वरमेव तस्या विरूपकरणार्थं लक्ष्मणायाज्ञां दत्तवान्। तत्र प्रकृत्या एव वीरोद्धतस्तत्रापि रामाज्ञानिलप्रेरितः कोपप्रज्वलितो लक्ष्मणस्तीक्ष्णासिना तस्याः नासां चिच्छेद।

ततः स्खलन्ती पतन्ती रुदन्ती सा खरादीनां पुरत आगत्य स्वदशां निवेद्य "यूयं सर्वे कापुरुषाः" एवं धिक्कृतवती, ततस्तद्भगिनीविरूपकरणजनितकोपपरवशास्ते खरदूषणादयः चतुर्दशसहस्राणि सैन्यान्यादाय रामेण सह योद्धुमागताः।

अथ रामोऽपि (सीतां लक्ष्मणेन रक्षितां विधाय) एकाकी एव ससैन्यान् तान्निमिषार्धेन संहृत्य शमनसदनातिथीन् चकार। ततः शूर्पणखाऽपूर्णमनोरथा स्वकीयां, तथा तदीयां च दशां रावणाय न्यवेदयत्। ततस्तद्दशां दृष्ट्वा क्रोधमूर्च्छितो रावणः स्वसाहाय्याय मारीचं (यो हि रामस्यैकेन बाणेन प्रेरितः सागरपरपारं प्राप्त आसीत्) अकथयत्।

अथासौ रावणनिवेदनं निशम्य, रामस्यालौकिकं विक्रमं तस्मै निवेदितवान्, ततो रावणः तत्कर्त्तव्यव्याहारात्प्रतिनिरुद्धोऽपि आसन्नमृत्युपाशबद्धस्तद्वाक्यमनादृत्य मारीचं सङ्गे कृत्वा रामस्याश्रमसमीपमागतः।

तत्र मायया काञ्चनमृगरूपं दधता मारीचेन मृगयालोलुपौ रामलक्ष्मणौ दूरमपवाहितौ। पश्चादेकाकिनीं सीतां भिक्षाव्याजवञ्चनया समीपमागत्य रावणोऽपहृत्यातिविलपन्तीमप्यादाय लङ्काभिमुखं प्रस्थितः

परन्तु मार्गे एव सीतायाः करुणपरिदेवनं निशम्य जराजर्जरोऽपि जटायुर्गृध्रराजो निजकोटरान्निर्गत्य सहसा रावणेन समरमुत्पादितवान्। तत्र तद्गृध्रनखचञ्चुपक्षप्रहारपरिक्षतो रावणो जटायुषं प्राणशेषं कृत्वा लङ्कामुपगतः।

अथ पश्चान्मृगयानिवृत्तौ रामलक्ष्मणौ सीताविरहितां पञ्चवटीं विलोक्य, नानाशङ्काकुलितचित्तावितस्ततोऽन्विष्य तामनवाप्य बहु विलेपतुः। परं ततो नातिदूरे प्रस्थिते वेदनार्त्तस्यैव जटायोर्नादं निशम्य सावधानौ तत्सकाशं गत्वा, ततः सर्वं सीताहरणात्मकमुदन्तं ज्ञात्वा, स्वहितहेतोर्गतासुं पक्षिराजं शोकाग्निना संस्कृत्य, तत्पारलौकिकगत्यर्थं मांसाशिभ्यः पक्षिभ्य आमिषभोज्यं वितीर्य, पुरः प्रस्थिते घोरदर्शनं कबन्धं नाम राक्षसं ददर्श। अथ तेनोपद्रुतौ तं हत्वा यावत्स्वस्थौ बभूवतुस्तावत्स च दिव्यगन्धर्ववेषं धृत्वा रामं प्रति सविनयमुवाच "हे प्रभो! अत्रैव परमधर्मचारिणीं स्वानुपमभक्तिशालिनीं श्रमणां स्वगमनेन कृतार्थां कुरु' इति उक्त्वा दिवं ययौ।

ततोऽतिविस्मितौ रामलक्ष्मणौ, तस्या आश्रमं गत्वा, तां सन्तोष्य, तयाऽतिसत्कृतः पश्चात्पुरःपम्पातटे प्रस्थितौ। तावत् किष्किन्धागिरिस्थः सुग्रीवश्चारमुखेन रामलक्ष्मणयोरागमनं निशम्य, तत्प्रवृत्तिं ज्ञातुमिच्छुः सत्वरं निजमन्त्रिप्रवरं हनुमन्तं प्रेषयामास।

अथ तेनापि द्रुतं तयोः समीपं गत्वा सर्वं तद्वृत्तं ज्ञात्वा 'अनेन मम प्रभोः सुग्रीवस्य महानुपकारो भविष्यतीति मनसि निश्चित्य' तौ ससत्कारं सुग्रीवसमीपमानीतौ।

ततः सुग्रीवोऽपि सबहुमानमानीयमानौ तौ विलोक्यावर्णनीयानन्दसन्दोहमग्नस्तयोः कुशलमपृच्छत, ततो हनुमत्सुग्रीवयोः संगत्या संभावितसाहाय्येन परमसन्तुष्टः सर्वमतीतं स्वकीयं वनवासादिसीताहरणान्तं समाचारमकथयत्।

अथ सुग्रीवेणापि तन्निखिलं निशम्याग्निं साक्षीकृत्य रामेण सह सख्यं कृत्वा स्नेहोद्घाटितहृदयेन बालिहेतुकं सर्वं दुःखजालं रामाय निवेदितम्। जातमित्रत्वस्य सुग्रीवस्य निशम्यावश्यमहं वधिष्यामि बालिनमिति प्रतिज्ञां कृतवते रामाय स्वशत्रोर्बालिनोऽमितं वीर्यमकथयत्। तथा च रामो बालिपराजययोग्यो न वेति संशयापन्नः बालिना हतस्य दुन्दुभेः पर्वतोपममस्थिकङ्कालं प्रदर्शयामास। ततो रामोऽपि सुग्रीवस्याशयं विज्ञाय, तस्य विश्वासं जनयन् उत्स्मयित्वा अवहेलया चरणाङ्गुष्ठेन तदस्थि दशयोजनं प्रचिक्षेप। तथाचैकेन बाणेन सप्त तालान् पर्वतं रसातलं च विभेद। ततस्तदलौकिकं विक्रमं रामस्य दृष्ट्वाऽतीव मुदितः सुग्रीवो बालिना युद्धकरणाय रामेण साकं किष्किन्धां जगाम। तत्र गत्वाऽसौ युद्धदाननिवेदनसूचकं चोच्चैरगर्जत्।

अथ तस्याभूतपूर्वरवं श्रुत्वा बाली स्वधर्मपत्न्यास्ताराया निरोधकरणं न मत्वा तां सन्तोष्य प्रासादान्निर्गत्य सुग्रीवेण युद्धार्थमुपगतः। तदानीं राम एकेन शरेण बालिनं जघान।

ततस्तत्सिंहासने सुग्रीवं संस्थाप्य, तारामङ्गदञ्च सामवाक्यैस्तुतोष। ततो मासान्तरे देशदेशान्तरादाहूतान् कपीन् सीतान्वेषणाय दशासु दिक्षु प्रस्थापयामास। तत्र दक्षिणदिशि हनूमदङ्गदजाम्बवत्प्रभृतयो गतवन्तः। तेषु बली हनूमान् सम्पातिगृद्ध्रस्योपदेशेन शतयोजनविस्तीर्णं समुद्रमुत्प्लुत्य रावणरक्षितां लङ्कां प्रविश्य, प्रवेशसमये राक्षसरूपपरिणतां लङ्कापुरीं मुष्टिनैकेन जित्वा भवने भवने भ्रमन् अन्तेऽशोकवनिकायां शिंशपावृक्षमूले रामं ध्यायन्तीं रावणेन तर्जितां सीतां ददर्श। तत्र रावणेऽपगते रामदत्ताङ्गुलीयकं प्रत्यभिज्ञानरूपं दत्वा क्षेमं चोक्त्वा शोकनाशकैर्वचनैस्तामाश्वास्य तदारामस्य तोरणं संमर्द्य तदुपद्रवनिवृत्त्यर्थमागतान् पञ्च सेनाध्य-

क्षान् सप्त मन्त्रिसुतान् संहृत्याक्षनामकं मन्दोदरीपुत्रं च निहत्य रावणदर्शनेच्छया ब्रह्मास्त्रबन्धनाधीनो जातः ।

तत्र गत्वा रावणाय परुषं वचनं श्रावयित्वा निर्भीक उपविश्यासीत्तदानीं तदुक्तं वचनं निशम्य कोपप्रज्वलितो दशाननो हनूमतः प्राणदण्डं प्रतिज्ञातवान् ।

तत्र विभीषणादयोऽमात्या "नैतद्युक्तं, कुत्रापि दूतो वध्यो न भवति, परन्तु वानरस्य लाङ्गुलं महदिष्टं, तेन तदेव वैकृत्यं करणीय"-मित्यादिभिः सान्त्वनैः कोपप्रज्वलितं रावणं प्रशमयामास । ततः प्रकृत्योपद्रविभिर्हिंसाशीलैस्तत्रापि रावणाज्ञप्तैर्दानवैर्बहुभिस्तूलकन्थादिभिर्लाङ्गूलं परिवेष्ट्य, तैलेनाप्लाव्य वह्निं प्रक्षिप्य प्रतिरथ्यां हनूमान् भ्रामितः ।

अथ प्रज्वलितेऽग्नौ सत्वरं स्फूर्त्योत्प्लुत्य सौधं, क्षणेनैव सकलां लङ्कां भस्मीचकार । केवलामशोकवनिकां विभीषणगृहमपि, विहाय ततः पुनः सीतामाश्वास्य सागरमुत्तीर्य, तत्तटस्थितैरङ्गदादिभिः कपिभिः सङ्गम्य, मधुवनमुपद्राव्य रामसमीपं गत्वा तं प्रणम्य मया सीता दृष्टेति निवेदितम् ।

ततो रामः सत्वरमेव सैन्योद्योगकरणाय सुग्रीवमाज्ञातवान् । अथ देशदेशान्तराद्गोलाङ्गूलान् रक्तमुखान्, कपीन्, भल्लूकांश्चैकीकृत्य रामलक्ष्मणाभ्यां सह समुद्रतटमागम्य स्थितः ।

परन्तु कथं विना समुद्रानुग्रहं ससैन्योऽहं परपारं गमिष्यामीति धिया तमनुकूलकरणाय दिनत्रयमुपवासनिरतः कुशासने चोपविशद्रामो न किमपि समुद्रप्रसादमवगम्य क्रोधवशीभूतः सूर्यसदृशैः शरैस्तं क्षोभयामास । ततो झटिति सागर आगत्य रामाय स्वरूपं दर्शयामास । एभिरेभिः प्रदेशैर्नलद्वारा सेतुर्बध्यतामित्युवाच । अथ रामोऽपि तथैव कृत्वा, तेन पथा सागरमुत्तीर्य लङ्कां गत्वा समरे सपुत्रामात्यबान्धवं रावणं हत्वा सीतां लोकापवादशङ्कया वह्निपरीक्षया शुद्धां विधाय, तेन कर्मणा त्रैलोक्यं चकितं कृत्वा विभीषणं लङ्काराज्येऽभिषिच्य ततो व्योमयानमारुह्य विभीषणसुग्रीवाङ्गदादिभिरिष्टमित्रैः सहितः प्रयागे भरद्वाजऋषेराश्रममुत्तीर्य तं प्रणम्य, तत्र तदाग्रहेण दिनमेकं स्थातुकामो भरतस्य निजप्रत्यागमनसंवादं हनुमता ज्ञापयित्वा, पुनर्व्योमयानेनैव नन्दिग्रामं गत्वा भ्रातृभिः संगम्य

तत्र मुनिवेषं विहाय, तैः सीतया च सहायोध्यामागम्य, तत्र सर्वेषामाग्रहेण राज्यभारोऽङ्गीकृतः। तत्र रामराज्ये सर्वे लोकाः प्रमुदिताः पुष्टाः सुधार्मिका निरामया दुर्भिक्षभयरहिता आसन्। स्त्रियः सर्वा सौभाग्यवत्यः पतिव्रताश्च बभुवुः। नहि कदाचित् क्वाप्यग्निजं भयं, नहि कोऽपि जले निमज्ज्य मृतो नहि कस्यापि वातव्याधिर्न कस्यापि ज्वरोपद्रवः, नहि कुत्रापि चौरोपद्रवः। सर्वत्र धनधान्यैः पूर्णा एव मही आसीत् यथा सत्ययुगे लोकाः प्रसन्नास्तथैव तदानीं सर्वविधैः सुखसौमनस्यैः सहिताः सन्ति।

तत्र रामो नानाविधान् बहुदक्षिणावतोऽश्वमेधादींश्च यज्ञान् कृत्वा गवां निखर्वं च ब्राह्मणाय दत्वा देशे देशे प्रजोपद्रवशमनाय खण्डराज्यं स्थापयित्वा सर्वान् स्वस्ववर्णाश्रमधर्मे नियोज्यैकादशसहस्रवर्षाणि राज्यं कृत्वा ब्रह्मलोकं गतवान्, एतत्कथानकं यः पठिष्यति, सः पुत्रपौत्राभ्यां सहितः स्वर्गं गमिष्यति। तथा च सर्वे स्वस्वाभिलाषं प्राप्स्यन्ति।

इति मूलरामायणकथानकं समाप्तम्।



श्रीजनकनन्दिन्यै नमः।

# अथ मूलरामायणम्।

ध्यात्वा श्यामापदाब्जं हृदि गुरुचरणं भक्तितोऽहं प्रणम्य
कुर्वे व्याख्यां सुधाख्यां शिशुसुमतिकरीं मूलरामायणस्य।
वाल्मीकिर्नारदाद्यं सकलहितकरं प्राप्य रम्योपदेशम्
पश्चात्तं विस्तरेणामलनिजमनसा निर्ममे काण्डरूपम्॥ १॥

तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥१॥

अन्वयः—तपस्वी, वाल्मीकिः, तपःस्वाध्यायनिरतं, वाग्विदां, वरं, मुनिपुङ्गवं, नारदं, परिपप्रच्छ।

व्याख्या—तपस्वी = तापसः, वाल्मीकिः = वल्मीकभवो मुनिविशेषः, तपःस्वाध्यायनिरतम् = तपश्चान्द्रायणादि, स्वाध्यायो वेदः, तदध्ययनं वा, तयोर्निरतं = सन्ततमासक्तम्, वाग्विदां = व्याकरणज्ञानां, वरं = श्रेष्ठम्, मुनिपुङ्गवम् = मुनिश्रेष्ठम्, नारदम् = एतन्नामकं ब्रह्मणो-मानसपुत्रं, परिपप्रच्छ = सर्वथाऽऽदरेण पृष्टवान्।

समासः—तप्यते भवबन्धनाशाय इति तपः, तपोऽस्यास्तीति तपस्वी, वल्मीकस्यापत्यं पुमान् वाल्मीकिः। अत्र वल्मीक एतज्जनकः कश्चिन्मुनिविशेषः। अथवा वल्मीको वामलूरस्तस्य कथं पुत्र इत्यत्र इयं वृद्धपरंपरया कथा श्रूयते यत् तपसि चिरं वर्त्तमानमेतम्मुनिं वल्मीकः स्वमृत्तिकयाऽऽच्छादितवान्। पश्चात् बहुभिर्वर्षैर्वृष्टिप्रभृतिभिरपगतायां तन्मृत्तिकायां स च मुनिः प्रकटीभूत इत्यतो वल्मीकजात इति। मुनिषु पुङ्गवो मुनिपुङ्गवस्तम्। नारं ज्ञानं ददातीति नारदः, यद्वा नरति सद्गतिं प्रापयतीति नरः परमात्मा, यथोक्तं भारते—'नरतीति नरः प्रोक्तः परमात्मा सनातन' इति। नर एव नारस्तं ददात्युपदिशतीति नारदस्तम्।

व्याकरणम्—परिपप्रच्छ = परि + प्रच्छ + लिट् + कर्तरि।

वाच्यान्तरम्—तपस्विना वाल्मीकिना नारदः परिपप्रच्छे ।

कोषः—तपः कृच्छ्रादिकर्मसु इत्यमरः । स्वाध्यायो वेदतपसो-रिति वैजयन्ती । सततेनारताश्रान्तसन्तताविरतानिशम् इत्यमरः । तपस्वी तापसः पारिकांक्षी वाचंयमो मुनिरित्यमरः । वाग्वेत्ता व्याकृतिज्ञः स्याद्वैयाकरण इत्यपि इति । देवाद्वृते वरः श्रेष्ठे इत्यमरः । बुधे च पुङ्गवः श्रेष्ठे इति विश्वः ।

सारार्थः—एकदा तपोधनो वाल्मीकिमुनिर्नारदं प्रति सकलशुभ-लक्षणलक्षितस्य जनस्य जिज्ञासार्थं वक्ष्यमाणविषयं पृष्टवान् ।

रामायणकथासन्दर्भः—अनेन पद्येन पुत्रलाभाशया राज्ञो दशरथस्य स्वकुलगुरुं वसिष्ठं प्रति प्रश्नः सूचितः । यतो मूलरामायणोपदेशा-त्तत्काण्डसप्तकं रामायणं तेन कृतम् । अतः प्रत्येककथाबीजरूपमे-कैकं पद्यं मूलरामायणस्य विद्यते ।

भाषाऽर्थः—किसी समय वाल्मीकिजी, तपस्या और वेदपाठ में निरन्तर लगे हुए, सर्वज्ञ मुनियों में प्रधान नारदजी से आगे आने वाली बातें पूछने लगे ॥१॥

**को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥२॥**

अन्वयः—अस्मिन्, लोके साम्प्रतं, को, नु, गुणवान्, कश्च, वीर्य-वान्, धर्मज्ञश्च, कृतज्ञश्च, सत्यवाक्यः, दृढव्रतः, अस्तीति शेषः ।

व्याख्या—अस्मिन् = परितो दृश्यमाने, लोके = भुवने, नु = प्रश्ने, साम्प्रतम् = अधुना, कः = अपरिचितः, गुणवान् = प्रशस्तगुणयुक्तः, तथा कश्च जनः वीर्यवान् = बलवान्, सर्वेभ्य इति सर्वत्र योज्यम् । धर्मज्ञः = वर्णाश्रमधर्मवेत्ता, कृतज्ञः = परोपकारज्ञः, सत्यवाक्यः = सत्यवचनः, दृढव्रतः = दृढनियमः (न कदापि कृतसंकल्पोच्छेदकरः) । क एवंरूपो जनो वर्त्तते ? इति ।

समासः—गुणाः वर्त्तन्तेऽस्येति गुणवान् । वीर्यं विद्यतेऽस्येति वीर्य-वान् । धर्मान् जानातीति धर्मज्ञः । कृतं जानातीति कृतज्ञः । सत्यं वाक्यं यस्य सः सत्यवाक्यः । दृढं व्रतं यस्य सः दृढव्रतः ।

व्याकरणम्—अत्राऽस्ति क्रियाध्याहारः कार्यः । अस्ति = अस् + लट् + कर्तरि ।

वाच्यान्तरम्—अस्मिन् लोके साम्प्रतं केन गुणवता भूयते।

कोषः—एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथेत्यमरः। लोकस्तु भुवने जने, इत्यमरः। नु पृच्छायां विकल्पे चेत्यमरः। सत्वशौर्यसन्ध्यादिके गुणः। वीर्यं बले प्रभावे चेत्यमरः। सत्यं तथ्यमृतं सम्यगित्यमरः। नियमो व्रतमस्त्रीत्यमरः।

सारार्थः—अस्मिन् संसारेऽधुना सकलैः शुभलक्षणैः सहितः, आदर्शपुरुषः कोऽस्तीति कथय। अत्र कृतज्ञलक्षणं यथा "कथं चिदुपकारेण कृतेनैकेन तुष्यति। न स्मरत्यपकाराणां शतमप्यात्मवत्तया।" तथा सत्यवचनपालनप्रतिपादनं यथा "अनृतं नोक्तपूर्वं मे, न च वक्ष्ये कदाचन॥" दृढव्रतत्वं यथा– 'अप्यहं जीवितं जह्यां त्वां वा सीते! सलक्ष्मणाम्। नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः।"

भाषाऽर्थः—इस संसार में अभी कौन गुणवान्, बलवान् और धर्म को जाननेवाला, उपकारको माननेवाला, और सत्य बोलनेवाला, दृढ़नियमवाला पुरुष है ? ॥२॥

**चारित्रेण च को युक्तः सर्वभूतेषु को हितः।**
**विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः॥३॥**

अन्वयः—('इह लोकेऽधुना' इति सर्वत्र योज्यम्) कश्च, चारित्रेण, युक्तः, कश्च, सर्वभूतेषु, हितः, कः, विद्वान्, कश्च, समर्थः, एकप्रियदर्शनः, च, कः, ।

व्याख्या—चारित्रेण = देशकुलाचारेण च, कः युक्तः = समन्वितः, सर्वभूतेषु = प्राणिमात्रेषु, हितः = इष्टसाधकः, कः, (सापराधानामपि जनानां हिते रतो हितकर्त्तेति)। कः विद्वान् = सर्वशास्त्रज्ञः? कः समर्थः = सर्वकार्यधुरन्धरश्च, कः एकप्रियदर्शनः = प्रधानप्रियदर्शनः?।

समासः—चरित्रमेव चारित्रम्, तेन चारित्रेण। सर्वाणि च तानि भूतानि, इति सर्वभूतानि तेषु सर्वभूतेषु। वेत्तीति विद्वान्, एकं केवलं, प्रधानं वा प्रियं मनोहरं दर्शनमवलोकनं यस्य सः।

व्याकरणम्—अत्राऽप्यस्तिक्रियाध्याहारो बोध्यः। युक्तः = युज् + क्तः। रतः = रम् + तः।

वाच्यान्तरम्—केन चारित्रेण युक्तेन सर्वभूतेषु हितेन विदुषा समर्थेन एकप्रियदर्शनेन भूयते।

कोषः—भूतं दमादौ च जन्तौ चेति बाणः। विद्वान् विपश्चिद्दोषज्ञः इत्यमरः। समर्थस्त्रिषु शक्तिस्थे इत्यमरः। एकोऽन्यर्थे प्रधाने च प्रथमे केवले तथेति कोषः।

सारार्थः—कः सच्चरित्रः, कः सकलकल्याणकरः, पण्डितः, कः सर्वलोकेभ्यः सुन्दर इति कथय।

भाषाऽर्थः—अच्छी चाल चलनवाला, सबोंका कल्याण करनेवाला, समझदार, और सबसे सुन्दर कौन है? ॥३॥

**आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।**
**कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥**

1954 Paper II Q.(a) page 27

अन्वयः—आत्मवान् कः ?, जितक्रोधः कः ?, द्युतिमान् कः ?, कः अनसूयकः ?, संयुगे, जातरोषस्य, कस्य, देवाः, च, बिभ्यति।

व्याख्या—कः आत्मवान् = वशीकृतान्तःकरणः, धृतिमान् वा, कः, जितक्रोधः = व्यर्थक्रोधरहितः, कः, द्युतिमान् = कान्तिमान्, कः अनसूयकः = अन्यगुणदोषकल्पनाहीनः। गुणेषु दोषाविष्करणमसूया न विद्यते यस्य सः, संयुगे = सङ्ग्रामे, जातक्रोधस्य = जनितकोपस्य, कस्य, देवाः = अमराः, च = अपि, बिभ्यति = भयं प्राप्नुवन्तीति, निग्रहसमर्था अपि भयभीता भवन्ति, किं पुनः प्रतिपक्षिणां कथेति भावः। अर्थाद्देवेभ्योऽप्यधिकशक्तिशाली क इति प्रश्नः।

समासः—आत्मा अस्यास्तीति आत्मवान्। जितः क्रोधो येन स जितक्रोधः। द्युतिः विद्यते यस्य स द्युतिमान्। न विद्यतेऽसूया यस्य सः अनसूयकः। जातो रोषो यस्य सः = जातरोषः।

व्याकरणम्—अत्राऽस्यस्तिक्रियाध्याहारः। 'पञ्चमी भयेने-'ति सूत्रेण भययोगे पञ्चमीविधानात् कस्य बिभ्यतीति न साधुरिति नाशङ्कनीयम्। सम्बन्धसामान्यविवक्षणात् आर्षत्वाद्वा तस्य साधुत्वात्।

वाच्यान्तरम्—आत्मवता जितक्रोधेन द्युतिमता अनसूयकेन केन भूयते। कस्य देवैः बिभीयते।

कोषः—आत्मा यत्नो धृतिर्बुद्धिरित्यमरः। कोपक्रोधामर्षरोषप्रतिघा-रुट्क्रुधौ स्त्रियामित्यमरः। शोभा कान्तिर्द्युतिश्छविरित्यमरः। अक्षा-न्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपीत्यमरः। अमरा निर्जरा देवा-इत्यमरः। संयुगोऽस्त्री रण इति कोषः।

सारार्थः—कः सकलगुणयुक्तः सन्नपि सकलदोषशून्य इति ।

भाषार्थः—कौन आत्मज्ञानवान् है ? कौन व्यर्थ क्रोध नहीं करता है ? कौन दूसरे के गुणों पर दोषारोपण नहीं करता है ? किसको क्रोधित देखकर लड़ाई में देवता लोग भी डर जाया करते हैं ? ॥४॥

**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।**
**महर्षे ! त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥५॥**

अन्वयः—हे महर्षे !, अहं (वाल्मीकिः), एतत्, श्रोतुं, इच्छामि, हि, मे, परं, कौतूहलम् (अस्ति) त्वं, एवंविधं, नरं, ज्ञातुं, समर्थः, असि ।

व्याख्या—हे महर्षे ! नारद ! अहं = प्रश्नकर्त्ता = वाल्मीकिः, एतत् = पूर्वोक्तसकलशुभलक्षणलक्षितं पुरुषं, श्रोतुं = तन्नाम ज्ञातुं, इच्छामि = अभिलषामि, हि = यतः, मे ( वाल्मीकेः ) परं = परमं = उत्कटं, कौतूहलं = कौतुकं, वर्त्तते मनसीतिशेषः । त्वं = नारदः, एवंविधं = पूर्वश्लोकचतुष्टयोक्तलक्षणं, नरं = जनं, ज्ञातुम् = अवगन्तुं, समर्थः = कुशलः, असि । न त्वदृतेऽन्यः कोऽपि कथयिष्यति, यतस्त्वमेव सततं सर्वगः सर्वज्ञश्च योगबलेनेति शेषः ।

समासः—कुतूहलमेव कौतूहलम् । महाँश्चासौ ऋषिर्महर्षिः ।

व्याकरणम्—इच्छामि = इष् + मिप् । श्रोतुम् = श्रु + तुम् । असि = अस् + सि । ज्ञातुम् = ज्ञा + तुम् ।

वाच्यान्तरम्—मया श्रोतुम् इष्यते । त्वया समर्थेन भूयते ।

कोषः—कौतूहलं कौतुकं च कुतुकं च कुतूहलम् इत्यमरः ।

सारार्थः—पूर्वोक्तसकललक्षणवन्तं जनं मे कृपया ब्रूहि । एतदर्थं मेऽतीवोत्कण्ठा वर्त्तते ।

भाषार्थः—हे नारदजी ! यह मैं सुनना चाहता हूं ; क्योंकि मुझे जानने की उत्कट आकांक्षा बनी है । सो आप ही वैसे पुरुष को जानने में समर्थ हैं, इस लिये आप कृपाकर मुझे बताइये ॥५॥

**श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।**
**श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥६॥**

अन्वयः—त्रिलोकज्ञः, नारदः, च, वाल्मीकेः, एतत्, वचः, श्रुत्वा

( भो वाल्मीके ! ) श्रूयताम् , इति, च, आमन्त्र्य, प्रहृष्टः, ( भूत्वा ) वाक्यं, अब्रवीत् ।

व्याख्या—त्रिलोकज्ञः = भूर्भुवःस्वर्लोकसमाचारज्ञः, (अतएव तादृशं जनं ज्ञास्यति) नारदः = ब्रह्मपुत्रः = सुरर्षिः, वाल्मीकेः = वाल्मीकसंज्ञकमुनेः, एतत् = पूर्वपद्योक्तम् , वचः = वचनं, श्रुत्वा = निशम्य, ततो वाल्मीकिं प्रति 'भो मुने ? श्रूयताम्' इति च पूर्वम् , आमन्त्र्य = अभिमुखीकृत्य, प्रहृष्टः = परमहर्षितः = प्रमुदितः सन्, वाक्यं = वक्ष्यमाणं भाषितं, अब्रवीत् = स्पष्टमुक्तवान् ।

समासः—त्रयाणां लोकानां समाहारस्त्रिलोकम् , तज्जानातीति त्रिलोकज्ञः, प्रकर्षेण हृष्टः, इति प्रहृष्टः ।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा । श्रूयताम् = श्रु + कर्मणि लोट् आमन्त्र्य = आ + मन्त्र + ल्यप् । अब्रवीत् = ब्रू + लङ् ।

वाच्यान्तरम्—त्रिलोकज्ञेन नारदेन वाक्यमवोचि ।

कोषः—सर्वज्ञश्च त्रिलोकज्ञो दिव्यचक्षुरतीन्द्रिय इति कोषः । तिङ्सुबन्तचयो वाक्यमित्यमरः । हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीत इत्यमरः ।

सारार्थः—सर्वोत्तमपुरुषं ज्ञातुमस्य परमोत्कण्ठा वर्त्तते इति वाल्मीकेरिच्छां ज्ञात्वा सर्वलोकवृत्तान्तवेत्ता नारदमुनिः प्रसन्नो-भूत्वा तस्मै वाल्मीकये, सावधानकरणार्थं 'श्रूयता'मित्युत्तरमाश्वासनं दत्वा ततो वक्ष्यमाणं वचनमूचे । यथा यथा श्रोतुराग्रहस्तथा तथा वक्तुः प्रतिपादने चादरो भवतीति प्रसिद्धिः । श्रोता यथा चैकमना शृणोति वक्ता तथा प्रीतिमना ब्रवीति ।

भाषाऽर्थः—तीनों लोक के समाचार को जाननेवाले, नारदमुनि जी, वाल्मीकिजी के पहलेका प्रश्न सुन, प्रसन्न होकर, 'आप सुनें' यह पहले आज्ञा देकर, पश्चात् आगे आनेवाली बातें कहने लगे ॥६॥

**बह्वो दुर्लभाश्चैव ये त्वया कीर्त्तिता गुणाः ।**
**मुने ! वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥७॥**

अन्वयः—हे मुने ! ये, बहवः, दुर्लभाः, च, गुणाः, एव, त्वया, कीर्तिताः, तैः, युक्तः, नरः, श्रूयताम् , अहं, बुद्ध्वा, वक्ष्यामि ।

व्याख्या—हे मुने = वाल्मीके !, ये = पूर्वोक्ताः, बहवः = सकलाः = अनेके, अपरिच्छिन्नाः, तत्रापि दुर्लभाः = लब्धुमशक्याः ( एकत्र जने, इतिशेषः ), गुणाः = शौर्यौदार्यगाम्भीर्यादयः, एवेति निश्चयेन, त्वया = वाल्मीकिना, कीर्त्तिताः = उक्ताः, तैः = गुणैः पूर्वोक्तैः, युक्तः = समन्वितः, नरः = पुरुषः, योऽस्ति तं बुद्ध्वा = मनसि विचिन्त्य = निश्चित्य अहं = नारदः, त्वां वक्ष्यामि, अर्थात्त्वं निराशो मा भव, वर्त्तते तादृशः पुरुषश्रेष्ठ इति श्रूयताम् ।

समासः—दुःखेन लभ्यन्ते इति दुर्लभाः ।

व्याकरणम्—वक्ष्यामि = ब्रू + लृट् । बुद्ध्वा = बुध + क्त्वा । श्रूयताम् = श्रु + कर्मणि लोट् ।

वाच्यान्तरम्—त्वं यान् गुणान् कीर्त्तितवान् । मया वक्ष्यते ।

सारार्थः—ये येऽनेके, तत्रापि दुर्लभा गुणास्त्वया उक्ता तैर्युक्तो नरो वर्त्तते इदानीं भुवि, तमहमविलम्बितं कथयामि, भवता श्रूयतां तत्, श्रोतव्यं च तत् ।

भाषार्थः—हे वाल्मीकिजी ! आप जो जो अनेक दुर्लभ गुणोंका वर्णन किये, उससे भूषित एक महापुरुष है; मैं जान बूझ कर कहता हूँ, आप सुनें ॥७॥

अथ कस्तादृशो नर इत्याह—

**इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।**
**नियतात्मा महावीर्यो द्युतिमान्धृतिमान् वशी ॥८॥**

अन्वयः—इक्ष्वाकुवंशप्रभवः, नियतात्मा, महावीर्यः, द्युतिमान्, धृतिमान्, वशी, जनैः, श्रुतः, रामः नाम, ( रामनामकः ) ( अस्ति ) ।

व्याख्या—इक्ष्वाकुवंशप्रभवः = इक्ष्वाकुकुलोत्पन्नः । इक्ष्वाकुर्नाम वैवस्वतमनोर्ज्येष्ठः पुत्रः, तस्य वंशः = अन्ववायः, प्रभवः = उत्पत्तिस्थानं यस्य स इति, अनेन कुलपरिचयो दत्तः । नियतात्मा = संयतचित्तः, अनेन गुणवान्, तथा आत्मवान् कः ? इत्यस्योत्तरं दत्तम् । महावीर्यः = अद्भुतपराक्रमशाली, अनेन को वीर्यवान् इत्यस्योत्तरं जातम् । अथ च विश्वामित्राश्रमे ताड़कासंहारः, मारीचस्य समुद्रपरपारे विक्षेपश्च सूचितः । द्युतिमान् = कान्तिमान् = अतिकमनीयकलेवरः, अनेनैतद्दर्शनेन जनकराजधानीजनतायाः मनो रामचन्द्रसौन्दर्याव-

लोकनलोलुपं जातमिति सूचितम्। तथा च कश्चैकप्रियदर्शन इत्यस्योत्तरं जातम्। धृतिमान् = सन्तोषवान्, वशी = अखिलजगद्वशङ्करः = सर्वस्वामी, अनेन 'कस्य बिभ्यति देवाश्च-' त्यादेरुत्तरं जातम्। एवंविधो रामः = एतन्नामकः, जनैः = महद्भिर्लोकैः, श्रुतः = ज्ञातः, न साधारणैः श्रुतः। अर्थात्तन्नामश्रवणेनापि लोकानां प्रत्यवायनाशो भवति। अनेन पद्येन वंश-गुण-नाम्नां परिचयो जात इति।

समासः—इक्षुमाकरोति, वा इक्षु इति शब्दमकति यः स इक्ष्वाकुः सूर्यवंशीयो भूपविशेषः, तस्य यो वंशः स इक्ष्वाकुवंशः स एव प्रभव-उत्पत्तिस्थानं यस्य स इक्ष्वाकुवंशप्रभवः। नियतः संयतः आत्मा यस्य स नियतात्मा। महद्वीर्यं यस्य स महावीर्यः। द्युतिः कान्तिरस्यास्तीति द्युतिमान्। धृतिरस्यास्तीति धृतिमान्। अखिलं संसारं वशेऽस्यास्तीति वशी। रमन्ते योगिनो यस्मिन् असौ रामः।

व्याकरणम्—श्रुतः = श्रु + क्तः।

वाच्यान्तरम्—जना इक्ष्वाकुवंशप्रभवं रामं अश्रौषुः। जनैः श्रुतेन रामेण भूयते।

कोषः—इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान् इत्यमरः। वंशोऽन्ववायः सन्तान इत्यमरः। श्रुतं शास्त्रावधृतयोरित्यमरः।

सारार्थः—तादृशः सकलगुणगणालङ्कृतः सूर्यवंशावतंसो रामनामको महापुरुषोऽस्ति। अनेन वंश-प्रकृति-नाम्नां परिचयो दत्तः। तत्र सूर्यवंशिनां साम्राज्यमवधदेशे एव सदात आसीदतो वंशपरिचयेनैव देशस्यापि परिचयो जातः।

भाषाऽर्थः—सूर्यवंशीय महाराज इक्ष्वाकुके वंशमें उत्पन्न, जितेन्द्रिय, बड़ा बलवान्, धैर्यवान्, और बड़ा ही सुन्दर, एक राम नाम से विदित, वैसा पुरुष है, जैसे आप पूछते हैं ॥ ८ ॥

**बुद्धिमान् नीतिमान् वाग्मी श्रीमाञ्छत्रुनिवर्हणः।**
**विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥९॥**

अन्वयः—बुद्धिमान्, नीतिमान्, वाग्मी, श्रीमान्, शत्रुनिवर्हणः, विपुलांसः, महाबाहुः, कम्बुग्रीवः, महाहनुः ( स चास्ति )।

व्याख्या—बुद्धिमान् = मतिमान् = अतिशयबुद्धिविशिष्टः, नीतिमान् = मर्यादावान्, सर्वत्र स्वचरिते सदा मर्यादापालनं कृतवान्,

चाणक्य-कामन्दकीय-शुक्रनीतिप्रभृतिनीतिज्ञो वा । ( कथं राज्यपालनं विधेयं, कथं वा मुनयो माननीयाः, कथं वा दुष्टाः स्तेनादयो दण्डनीयाः इत्यादिविधानेऽतीव पटुरिति भावः । ) वाग्मी = प्रशस्ता वाग् अस्यास्तीति वाग्मी = सर्वसमयोचितचातुरीचञ्चितवचनवान्, श्रीमान् = सर्वातिशायिशोभैश्वर्यादियुक्तः, शत्रुनिवर्हणः = शत्रुविनाशकः, नीतिप्रतिकूलजनशातयिता, अनेन प्रभावातिशयः सूचितः । विपुलांसः = उन्नतकन्धरः, अनेन अतिभाग्यवत्ता सूचिता*, तथा च उन्नतकन्धरेण व्यायामदृढगात्रमपि सूचितम् । †महाबाहुः = आजानुबाहुः, ‡कम्बुग्रीवः = शंखसदृशरेखात्रयविशिष्टकण्ठः, §महाहनुः = मांसलकपोलाधोभागः, एवंभूतः स महापुरुषोऽस्ति ।

समासः—बुद्धिरस्यास्तीति बुद्धिमान् । नीतिः कामन्दक्यादिरस्यास्तीति नीतिमान्, वाग् = प्रशस्ताऽस्यास्तीति वाग्मी = वचनरचनाचतुरः । श्रीर्लक्ष्मीरस्यास्तीति श्रीमान् । शत्रुं निवर्हयति दूरीकरोति इति शत्रुनिवर्हणः । विपुलौ अंसौ स्कन्धौ यस्य सः विपुलांसः । महान्तौ = मांसलौ लम्बितौ च बाहू भुजौ यस्य सः महाबाहुः । कम्बुग्रीवः = कम्बुः इव रेखात्रयविशिष्टा ग्रीवा यस्य सः । महत्यौ पुष्टे हनू यस्य सः महाहनुः ।

वाच्यान्तरम्—बुद्धिमता रामेण भूयते ।

कोषः—बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिरित्यमरः ।

वाचोयुक्तिपटुर्वाग्मी इत्यमरः ( का० ३ व० १ श्लो० ३५ )

द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रव इत्यमरः ॥ का० २ । ६ ।

वड्रोरुविपुलं पीनं पीन्नो तु स्थूलपीवरे इत्यमरः ॥ का० ३ । ३३ ।

---

*यत उक्तं सामुद्रिके—"कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्ते सुखप्रदाः" ।

†यस्य जानुपर्यन्तं बाहू लम्बितौ भवतः सचातीव भाग्यवान् भूमिपतिर्भवतीति यथोक्तं सामुद्रिके—"आजानुलम्बिनौ बाहू वृत्तपीनौ महीश्वरे ।"

‡यस्य गले रेखात्रयं विद्यते स च महाराजो भवतीतियथोक्तं सामुद्रिके—"कम्बुग्रीवश्च नृपतिर्लम्बकर्णोऽतिभूषणः" इति । तत्रोक्तं कम्बुग्रीवलक्षणम् = कम्बुग्रीवा त्रिरेखा सा वटुघांटा कृकाटिका ।

§ यथा सामुद्रिके—"मांसलौ तु हनू यस्य भवतस्त्वीषदुन्नतौ । स नरो मृष्टमश्नाति यावदायुः सुखान्वितः ।" तथा च संहितायाम्—"पूर्णमांसलहनुस्तु भूपतिः ।"

अंसः स्कन्धः कन्धरस्तु इति कोषः ।
भुजबाहू प्रवेष्टो दोरित्यमरः ।
कम्बुग्रीवा त्रिरेखा सा वटुर्घाटा कृकाटिकेत्यमरः ।
शङ्खःस्यात्कम्बुरस्त्रियामित्यमरः ।

सारार्थः—अतिशयबुद्धिविशिष्टः सकलनीतिशास्त्रज्ञः, वाक्पटुर्लक्ष्मीवान् शत्रुसूदनः, दृढशुभलक्षणाङ्गः, स रामनामकोऽस्ति ।

भाषार्थः—बड़ेही बुद्धिमान, और नीति शास्त्र को जाननेवाले, मौके पर चातुर्यभरीं बातें बोलनेवाले, लक्ष्मी शोभाशाली, शत्रु का संहार करनेवाले, मोटे कन्धेवाले, लम्बे लम्बे बाँह वाले, गले में तीन रेखा चिन्हवाले, पुष्ट दाढ़ीवाले, वह (राम नाम के) हैं ।॥९॥

**महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।**
**आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥१०॥**

अन्वयः—सः, महोरस्कः, महेष्वासः, गूढ़जत्रुः, अरिन्दमः, आजानुबाहुः, सुशिराः, सुललाटः, सुविक्रमः, ( अस्ति ) ।

व्याख्या—स रामः, महोरस्कः = विस्तीर्णवक्षस्थलः, महेष्वासः = बृहद्भेद्यधनुः, गूढ़जत्रुः = निमग्नांसद्वयवर्त्तिसक्थिकः । अरिन्दमः = शत्रुक्षयः, आजानुबाहुः = जङ्घान्तलम्बितभुजः, सुशिराः = छत्राकृतिमस्तकः, सुललाटः = अर्धचन्द्राकृतिभालः, सुविक्रमः = गजसिंहसमगमनः, अस्ति ।

"एतानि शुभलक्षणानि सार्वभौमसंभवसूचकानि सन्ति । तथा चोक्तं सामुद्रिके—स्थिरं विशालं कठिनमुन्नतं मांसलं समम् । वक्षो-यस्य महीपालस्तत्समो वा भवेन्नरः ॥ विषमैर्जत्रुभिर्निःस्वाः अतिसूक्ष्मैश्च मानवाः । उन्नतैर्भोगिनो निम्नैर्निस्वाः पीनैर्नराधिपाः ॥ दीर्घभ्रूबाहुमुष्कश्च चिरञ्जीवी धनी नरः ॥ समवृत्तशिराश्चैव छत्राकारशिरास्तथा । एकच्छत्रां महीं भुंक्ते दीर्घमायुश्च विन्दति ॥ अर्धचन्द्रनिभं तुङ्गं ललाटं यस्य स प्रभुः ॥ सिंहर्षभगजव्याघ्रगतयोमनुजामुने । सर्वत्र सुखमेधन्ते सर्वत्र जयिनस्तथा ॥" इति ।

समासः—महत् विशालमुरो वक्षो यस्यासौ महोरस्कः । महान् इष्वासो धनुर्यस्यासौ महेष्वासः । गूढ़े मांसलत्वेन निमग्ने, जत्रुणी अंसद्वयमध्यवर्त्तिनी सक्थिनी यस्यासौ गूढ़जत्रुः । अरिं शत्रुं दमयतीति अरिन्दमः । वा अरिन्दमा शत्रुदमना रेखा यस्य सोऽरिन्दमः । आजानु

जानुपर्यन्तं बाहू यस्य स आजानुबाहुः । सुशिराः सुष्ठु शिरो यस्य सः; शोभनं ललाटं यस्य सः सुललाटः । शोभनं विक्रमः पादविक्षेपो यस्य सः ।

वाच्यान्तरम्—महोरस्केनेत्यादिविशेषणविशिष्टेन रामेण भूयते ।

कोषः—उरो वत्सं च वक्षश्चेत्यमरः ।

इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम्, इत्यमरः ।

स्कन्धो भुजशिरोंऽसः स्त्री, सन्धी तस्यैव जत्रुणी इत्यमरः ।

उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियामित्यमरः ।

भालं ललाटं गोधिः स्यादिति कोशः ।

क्रान्तौ च विक्रम इत्यमरः ।

सारार्थः—विस्तीर्णवक्षा-,महाधनुःपुष्टस्कन्धप्रदेशः, शत्रुदमनशीलः, जानुपर्यन्तलम्बितबाहुः, शोभनमस्तकः, अर्धचन्द्राकृतिसमभालः, शोभनगतिः स चोक्तपूर्वो रामोऽस्तीति । एते सर्वे गुणास्तस्मिन्नेव वर्त्तन्ते, नान्यस्मिन्निति शेषः ।

भाषार्थः—चौड़ी है सीना जिसकी, बड़ा है धनुष जिसका, छिपी हैं कन्धे पर की हड्डियाँ जिसकी, और शत्रु को दबानेवाले, ठेहुने तक गिरती हुई बाहेंवाले, आधे चन्द्रमा के समान भालवाले, और हाथी के सदृश अच्छी चाल चलनेवाले, ऐसे वह राम हैं ॥१०॥

**समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।**
**पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥११॥**

अन्वयः—समः, समविभक्ताङ्गः, स्निग्धवर्णः, प्रतापवान्; पीनवक्षाः, विशालाक्षः, लक्ष्मीवान्, शुभलक्षणः, स चास्ति ।

व्याख्या—समः = नातिप्रांशुर्न वाऽतिवामनः, अर्थान्मध्यमोन्नतः । अर्थात्-'षण्णवत्यंगुलोत्सेधः सार्वभौमो भवेन्नृप'—इति लक्षणवान् । समविभक्ताङ्गः = समविभागीकृतसकलाङ्गः *, स्निग्धवर्णः = चिक्कणत्वविशिष्टोऽर्थाच्छ्यामलवर्णः †, प्रतापवान् = विक्रमवान् अनेन ताड़कामारीचप्रमुखदानवस्य संहारार्थं विश्वामित्रस्य मुनेराश्रमग-

* यथा चोक्तं सामुद्रिके—"भ्रुवौ नासापुटौ नेत्रे कर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी । करौ पादौ च सुस्फीतौ यस्य स्तः स तु भूपतिः ।"

† तथाचोक्तम्—"स्निग्धेन्द्रनीलवर्णस्तु भोगं विन्दति पुष्कलम् ।"

मनं, तथा च दानवोपद्रवदूरीकरणमपि सूचितम्। कथमन्यथा मूलमात्रोपदेशात्सप्तकाण्डात्मकं रामायणं निर्मितं वाल्मीकिना। पीनवक्षाः = पुष्टवक्षस्थलः, मांसलत्वेनोन्नतोरस्क इत्यर्थः। पूर्वश्लोके महोरस्क इत्यनेन विस्तृतयशाः, अत्र मांसलवक्षाः, अतो न पुनरुक्तिः। तथा चानेन व्यायामबाहुल्यकरणं सूचितम्। तथा च मांसलवक्षस्थलत्वेनाधिकबलवत्तया दानवपराजयोऽपि सूचितः, विशालाक्षः = कर्णपर्यन्तदीर्घलोचनः, अनेन हावभाववेत्तृत्वं सूचितम्, पुरतो जनकपुरे स्वयंवरसंभवात्, लक्ष्मीवान् = सर्वावयवशोभासंपन्नः, सर्वाधिकसम्पत्तिशाली वा, शुभलक्षणः = पूर्वोक्ताधिकसामुद्रिकशुभलक्षणलक्षितः, अनेन निजचरणकमलस्पर्शेनाहल्योद्धरणं सूचितम्, यतो हि किमन्यच्छुभलक्षणवत्त्वं कथनीयम्—यत्पादरजःस्पर्शादेव प्रस्तरजड़देहाऽपि सा सुकोमलाङ्गी सम्पन्ना।

समासः—समानि न्यूनाधिकपरिमाणशून्यानि, विभक्तान्यमीलितान्यङ्गानि यस्य सः समविभक्ताङ्गः, स्निग्धः = चिक्कणो वर्णः श्यामलो यस्य सः स्निग्धवर्णः, अग्रे सुन्दरकाण्डे चोक्तत्वात्। पीनं मांसलं वक्षो यस्य सः पीनवक्षाः। विशाले दीर्घे अक्षिणी नयने यस्य सः विशालाक्षः। शुभलक्षणः = शुभानि सामुद्रिकोक्तानि सकलानि लक्षणानि यस्यासौ शुभलक्षणः।

वाच्यान्तरम्—समेनेत्यादिविशेषणविशिष्टेन रामेण भूयते।

कोषः—चिक्कणं मसृणं स्निग्धमित्यमरः।
वड्रोरुविपुलं पीनं पीव्नी तु स्थूलपीवरे इत्यमरः।
विशङ्कटं पृथु बृहद्विशालं पृथुल महदित्यमरः।
लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी इत्यमरः।
चिन्हं लक्ष्म च लक्षणमित्यमरः।

सारार्थः—मध्यमोन्नतः, समुचितसंयुक्तसकलावयवः, कोमलदेहरागः (श्यामलः) पराक्रमी, पृथुलवक्षाः, अलौकिकशोभैश्वर्यशाली सकलशुभलक्षितः स च रामनामधेयः वर्त्तते।

भाषार्थः—मध्यम दर्जे के लम्बे, ठीक रूप से सब अङ्गों के विभाग जुड़ाववाले, चिकने श्याम वर्णवाले, मोटी सीनावाले बड़ी बड़ी आंखवाले, हर एक अच्छे लक्षणों से युक्त, ऐसे वह राम हैं ॥११॥

**धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।**
**यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥१२॥**

अन्वयः—धर्मज्ञः, सत्यसन्धश्च, प्रजानां, च, हिते, रतः, यशस्वी, ज्ञानसम्पन्नः, शुचिः, वश्यः, समाधिमान्, स चास्ति ।

व्याख्या—धर्मज्ञः = श्रौतस्मार्त्तधर्मज्ञाता । सत्यसन्धः = दृढप्रतिज्ञः, तथा चोक्तम् "अप्यहं जीवितं जह्यां त्वां वा सीते ! सलक्ष्मणाम् । नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ।" प्रजानां = जनानां हिते हितकरणे, रतः = तत्परः, यशस्वी = यशस्वान्, अर्थात् यस्मिन् कार्ये हस्तक्षेपं करोति, तत्र तत्साफल्यं लभते एवेति, ज्ञानसम्पन्नः = ब्रह्मज्ञानसम्पन्नः, वा भूतपूर्वेतिहासज्ञानसंयुतः, अनेन विश्वामित्रमुनेः सकाशान्मिथिलामार्गवर्त्तिपूर्वभूपतीनां नगराणि दृष्ट्वा तद्विषयकेतिवृत्तश्रवणेनातीवज्ञानसंयुतः । शुचिः = अतिशयबाह्यान्तरशुद्धः, अनेन विश्वामित्रस्य सहवासेन मुनिवृत्तित्वं सूचितम् । वश्यः = वशंगतः, गुरूणामितिशेषः, वा भक्तपराधीनः, अनेन गुरुभक्तिरतीव सूचिता, तेन चोपदेशदानयोग्यत्वमपि सूचितम् । समाधिमान् = आश्रितरक्षणविषयकविचारविशिष्टः, वा विश्वामित्रोपदिष्टदिव्यास्त्र-मन्त्र-तन्त्रपरिशीलनासक्तः ।

समासः—धर्मान् शरणागतरक्षणादीन् जानातीति धर्मज्ञः । सत्याऽमोघा सन्धा प्रतिज्ञा यस्य सः = सत्यसन्धः । यशोऽस्यास्तीति यशस्वी । ज्ञानैः सम्पन्न इति ज्ञानसम्पन्नः । समाधिरस्यास्तीति समाधिमान् ।

वाच्यान्तरम्—धर्मज्ञेनेत्यादिविशेषणविशिष्टेन रामेण भूयते ।

कोषः—प्रतिज्ञानेऽवधौ सन्धा इति वैजयन्ती । प्रजा स्यात्सन्ततौ जने इत्यमरः । शुचिर्मेध्ये सिते शुक्ले इति कोषः । समाधिर्योगचिन्तनमिति कोषः ।

सारार्थः—स च रामः सकलधर्मवेत्ता, स्थिरप्रतिज्ञः, प्रजापालकः अहल्योद्धरणमुनियज्ञरक्षणप्रभृतिभिरलौकिककर्मभिरतिशययशस्वान्, नानाविषयकज्ञानवान्, अतिपवित्रः, गुरुजनसेवकः, स्वयं च समाधिनिष्ठोऽस्ति ।

भाषाऽर्थः—धर्म को जाननेवाले, दृढ़प्रतिज्ञ, प्रजाओं के कल्याण करने में सदैव लगे हुए, बड़े यशवाले, सब प्रकार के ज्ञान से भरे

हुए, परम पवित्र, गुरु के आज्ञाकारी, और स्वयम् योगक्रिया करने वाले हैं ॥१२॥

**प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ।**
**रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥१३॥**

अन्वयः—प्रजापतिसमः, श्रीमान्, धाता, रिपुनिषूदनः, जीवलोकस्य, रक्षिता, धर्मस्य, परिरक्षिता, च, स, वर्त्तते ।

व्याख्या—प्रजापतिसमः = ब्रह्मसदृशः, सर्वजीवनियन्तेतिभावः । श्रीमान् = शोभावान्, अनेन जनकपुरे रामस्य सौन्दर्याधिक्यं सूचितम् । धाता = पितृवत्पालकः, रिपुनिषूदनः = शत्रुसंहारकः, अनेन जनकपुरे पराक्रमोत्कर्षदर्शनजनितस्य नृपाणामसूयाक्षोभादेः शत्रोः संहारकः, वा कामक्रोधादिशत्रोर्नाशकः वा विश्वामित्रस्य मुनेराश्रमे मखविघ्नकराणामसुराणां नाशयिता, जीवलोकस्य = प्राणिमात्रस्य, रक्षिता = संरक्षकः, ननु पूर्वं शत्रुनाशक इत्युक्तं, तत्र शत्रोरपि जनमात्रस्यान्तर्गतत्वात्, अधुना जीवस्य संरक्षक इति विशेषणं परस्परविरुद्धं दृश्यते तत्कथं युक्तमित्युच्यते, शत्रोरपि दण्डदानेन परिणामे सुखप्राप्तिरेव, शिक्षालाभो वा भवति । तेन शत्रोरपि संहरणं वस्तुतः संरक्षणमेव* । धर्मस्य = श्रौतस्मार्त्तस्य, परिरक्षिता = सर्वतोभावेन संरक्षकः, इति ।

समासः—पाति रक्षतीति पतिः । प्रजानां जनानां, वा भुवनानां पतिरिति प्रजापतिः, तेन समः सदृश इति प्रजापतिसमः । श्रीरस्यास्तीति श्रीमान् । रिपून् शत्रून् वा कामादीन् निषूदयति इति शत्रुनिषूदनः । जीव एव लोक इति जीवलोकः तस्य जीवलोकस्य ।

वाच्यान्तरम्—प्रजापतिसमेन रामेण भूयते ।

कोपः—धाता प्रजापतिर्वेधा विधाता विश्वसृड्विधिरित्यमरः ।

सारार्थः—स च रामः ब्रह्मसमः, लक्ष्मीवान्, शत्रुसंहारकः, जीवमात्ररक्षकः, धर्मरक्षकश्च वर्त्तते इति ।

---

*एवमेवोक्तं सप्तशत्याम्—"त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्धनि तेऽपि हत्वा । नीता दिवं रिपुगणा भयमप्यपास्तमस्माकमुन्मदसुरारिभवं नमस्ते ॥"

भाषार्थः—ब्रह्मा के समान, लक्ष्मीवान्, सबको पालनेवाले, शत्रुओं को दण्ड देनेवाले, प्राणीमात्रकी रक्षा करनेवाले, और धर्मपालक हैं ॥१३॥

रक्षिता स्वस्य धर्मस्य, स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥१४॥

अन्वयः—स्वस्य, धर्मस्य, रक्षिता, स्वजनस्य, च, रक्षिता, वेदवेदाङ्गतत्वज्ञः, धनुर्वेदे, च, निष्ठितः, स च, रामोऽस्ति ।

व्याख्या—स्वस्य = क्षत्रियजातेः, धर्मस्य = राजशासनपद्धतिरूपस्य, रक्षिता = पालकः, सदैव राजधर्मानुसरणशीलः । अपराधिनं पुत्रकलत्रमित्रादिकमपि दण्डयति, उत्तमकार्यकरं तुच्छजनमपि पालयति इति भावः । अनेन पूर्वश्लोकोक्तविशेषणविरोधपरिहारो जातः, तथा च जनकस्य प्रतिज्ञापालनं सूचितम् । प्रतिज्ञापालन क्षत्रियस्य मुख्यो धर्मः । स्वजनस्य = निजाश्रयवर्त्तिनो भक्तस्य, रक्षिता = इच्छापूरकः, अनेन स्वानुरागशालिन्याः सतीशिरोमणिरूपायाः सीतायाः मनोरथपूर्त्तिकरत्वं सूचितम् । वेदवेदाङ्गतत्वज्ञः = सर्वज्ञः, वेदा ऋक्यजुःसामाथर्वसंज्ञकाः, वेदाङ्गानि च शिक्षादीनि*, तेषां तत्वज्ञः सारार्थवेत्ता, अनेन सर्वविधनिगमागमवेत्तृत्वं सूचितम् ।† धनुर्वेदे = शरप्रहरणसंहरणप्रभृतिशस्त्रप्रयोगे चकारादन्योपवेदेऽपि, निष्ठितः = प्रतिष्ठितः, अनेन शिवधनुर्भङ्गः, परशुरामपराजयश्च सूचितो नारदेन ।

समासः—स्वः स्वकीयो जन इति स्वजनः । वेदस्याङ्गानि वेदाङ्गानि, वेदाश्च वेदाङ्गानि च वेदवेदाङ्गानि, तेषां तत्वं जानातीति वेदवेदाङ्गतत्वज्ञः । धनुषो वेदो धनुर्वेदस्तस्मिन् धनुर्वेदे ।

वाच्यान्तरम्—स्वस्य धर्मस्य रक्षित्रा रामेण भूयते ।

कोषः—ऋगथर्वसामयजुषो वेदाश्चत्वार एव हि ।

सारार्थः—स चोक्तपूर्वो रामः राजधर्मरक्षकः, स्वपरिजनपालकः, निगमागमज्ञानसम्पन्नः, धनुर्वेदपरिनिष्ठितश्चास्ति ।

---

* तत्र यथोक्तम्—"शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दसां विचितिश्चेति षडङ्गानि प्रचक्षते ॥"

† तत्रोपवेदगणनन्त्वेवम्—"आयुर्वेदो धनुर्वेदो वेदो गान्धर्वसंज्ञकः । अर्थशास्त्रमिति प्रोक्तमुपवेदचतुष्टयम् ।

भापाऽर्थः—अपने ( क्षत्रिय ) कर्मकी रक्षा करनेवाले, और अपने परिवारकी भी रक्षा करनेवाले, वेदों ( ऋक्, साम, यजु, अथर्व ) के, वेदाङ्गों ( शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द, ज्यौतिष ) के तत्त्व ( सारांश ) को जाननेवाले, धनुर्वेद में तथा उपवेदों में भी परिनिष्ठित ( अच्छी तरह से समझदार ) हैं ॥१४॥

**सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ।**
**सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥१५॥**

अन्वयः—सर्वशास्त्रार्थतत्त्वज्ञः, स्मृतिमान्, प्रतिभानवान्, सर्वलोकप्रियः, साधुः, अदीनात्मा, विचक्षणश्च, स रामोऽस्ति ।

व्याख्या—सर्वशास्त्रार्थतत्त्वज्ञः = निःशेषागमाशयसारज्ञः । स्मृतिमान् = स्मरणशक्तिमान्, यदधीतं तत्सर्वं कण्ठाग्र एव वर्त्तते, न पुस्तकावलोकनावश्यकत्वम् । अनेनालौकिकी मेधा प्रतिपादिता । प्रतिभानवान् = प्रत्युत्पन्नमतिशाली, सर्वलोकप्रियः = सकलजनरञ्जकः । शत्रुरपि रामाचरणेन मुदितो भवति, का कथा मित्रस्य । अर्थात् हरधनुर्भङ्गानन्तरं सत्वरमागतस्य प्रकृतिकोपनस्य परशुरामस्यापि रामोपरि तावत्कालमेव कोप आसीत्, यावत् तेन सहालापो न जातः । अतएवालापानन्तरं रामपराक्रमं विदित्वा परशुरामो हि शान्तस्वान्तोऽभूत् । साधुः = सज्जनः, मधुरस्वभावः । अदीनात्मा = सदोत्साहयुक्तः, अस्ति ।

समासः—सर्वाणि शास्त्राणि इति सर्वशास्त्राणि, अर्थानामभिप्रायाणां तत्त्वं जानातीति अर्थतत्त्वज्ञः । सर्वशास्त्राणाम् अर्थतत्त्वज्ञ इति सर्वशास्त्रार्थतत्त्वज्ञः । स्मृतिर्धर्मसंहिताऽस्यास्तीति वा, स्मृतिः स्मरणशक्तिरस्यास्तीति स्मृतिमान्, प्रतिभानं प्रतिभाऽस्यास्तीति प्रतिभानवान् । सर्वे लोका इति सर्वलोकास्तेषां प्रिय इति सर्वलोकप्रियः । न दीन इत्यदीनः, अदीन आत्मा यस्य सः अदीनात्मा ।

वाच्यान्तरम्—सर्वशास्त्रार्थतत्त्वज्ञेन रामेण भूयते ।

कोषः—स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रह इत्यमरः ।
महाकुलकुलीनार्यसभ्यसज्जनसाधव इत्यमरः ।
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः । इत्यमरः ।

सारार्थः—स च सकलशास्त्राभिप्रायलक्ष्यज्ञः, स्मरणशक्तिशाली,

प्रतिभासमन्वितः, सकलजनानन्ददः, सज्जनः, अकार्पण्यप्रकृतिः, प्राज्ञश्चास्तीति ।

भाषार्थः—सब शास्त्रों के तत्त्व को समझने वाले, स्मरणशक्ति वाले, और प्रतिभाशाली, सब लोगों के प्रिय, और परम सज्जन उत्साह से भरे हुए, और अच्छे विज्ञानी भी हैं ॥१५॥

1954
Page 27
2.(b)

**सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः ।**
**आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥१६॥**

अन्वयः—समुद्रः, सिन्धुभिः, इव, सर्वदा, असौ, रामः, सद्भिः, संगतः, (तथा) आर्यः, सर्वसमः, एव, च पुनः, सदैव, प्रियदर्शनः, अस्ति ।

व्याख्या—समुद्रः = सागरः, सिन्धुभिः = नदीभिः = सरिद्भिः, इव, स, राम, सर्वदा = होमदेवपूजासभाधिष्ठानकालेषु, सद्भिः = सात्त्विकजनैः अमात्यगुरुपुरोहितैः, अभिगतः = संगतः, वा सदा सद्भिः = साधुभिः, अभिगतः = सेवितः, आर्यः = सर्वपूज्योऽपि, सर्वसमः = वैषम्यरहितः, यथैवान्यः स्वपरिवारस्तथैवासावपि । सदैव = शश्वत्, प्रियदर्शनः = प्रसन्नरूपः, न कदाचित् खिन्नचित्तो भवतीति । अनेन हरधनुर्भङ्गानन्तरं सहसाऽऽगतं कोपप्रज्वलितं परशुराममपि विलोक्य रामस्य क्षोभहीनत्वं सूचितम् ।

समासः—सर्वैः सम इति सर्वसमः । प्रियं दर्शनं यस्य सः प्रियदर्शनः ।

व्याकरणम्—अभिगतः = अभि + गम् + क्तः ।

वाच्यान्तरम्—सर्वदाऽभिगतेन रामेण भूयते ।

कोषः—एकदा सर्वदा सदेत्यमरः ।

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिरित्यमरः ।
सिन्धुर्वा सरिति स्त्रियाम् इत्यमरः ।
आर्यः पूज्यः कुलीनोऽस्त्रीति कोषः ।

सारार्थः—यथा सदा नदीभिः समुद्रः संयुतो वर्त्तते, तथैव रामोऽपि बहुभिः साधुभिर्मन्त्रिप्रधानप्रभृतिभिर्वेष्टितः शोभते, न कदापि एकाकी कमप्यर्थं विचारयति । स्वयं सर्वोत्कृष्टोऽपि सकलसाधारणवत्सरलचित्तः, दुःखोचितसमयेऽपि प्रसन्न एव विद्यत इति ।

२

भाषार्थः—जैसे नदियों से समुद्र, सब दिन मिला रहताहै, वैसे ही रामचन्द्रजी भी सज्जन महात्माओं से सम्मिलित रहते हैं। और परम पूज्य होने पर भी सकल साधारण के ऐसे सरल स्वभाव, और सदा प्रसन्न रहते हैं ॥१६॥

**स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः।**
**समुद्र इव गाम्भीर्ये, धैर्येण हिमवानिव ॥१७॥**

अन्वयः—सः (रामः) च, सर्वगुणोपेतः, कौसल्यानन्दवर्धनः, गाम्भीर्ये, समुद्र, इव, धैर्येण, हिमवान्, इव, वर्त्तते।

व्याख्या—सः = प्रसङ्गवर्णनीयो रामः, सर्वगुणोपेतः = सकलोक्तानुक्तगुणालंकृतः, कौसल्यानन्दवर्धनः = निजजननीहर्षजनकः, अनेन ससीतस्य रामस्यायोध्यायामागमनं सूचितम्। अलौकिकरूपगुणवत्या नववध्वाः सीतायाः दर्शनेन परिणतवयस्कायाः कौसल्यायाः श्वश्र्वा आनन्दाधिक्योदयः स्वाभाविक एव। एकं तद्दिनमासीद्यत्र पुत्रोत्पत्तेः सर्वथा नैराश्यम्, अद्य तु तद्दिनं, यत्र सवधूकपुत्रमुखदर्शनं जातमतस्तद्युक्तमेव। तथा च कौसल्यानन्दवर्धन इत्यनेन पितुरपेक्षया मातुः *पुत्रोत्पत्तावानन्दातिशयो भवतीति च सूचितम्, गाम्भीर्ये = गभीरत्वे, समुद्रः = सागर, इव, यथैव स्वान्तर्वर्त्तिविविधरत्नजालं नानाशुभाशुभवस्तूनि वा समुद्रः स्वकीयागाधे हृदयतले रक्षति, तथैवायं रामोऽपि स्वेषां परेषामपि गोपनीयं समाचारसमूहं गोपयति, न साधारणबाल इव बालत्वसुलभचाञ्चल्ययुक्त-इति भावः। धैर्येण = धृत्या, हिमवान् = हिमालयः तुषारपर्वत इव वर्त्तते, यथाऽनिशमतुलैः पतितैस्तुहिनैः स च गिरिरव्यथो निर्विकारश्च दृश्यते, तथैवायं रामोऽपि प्रत्युपस्थितैः कठिनकार्यशतैः स्वशिरसि वर्त्तमानैर्निर्विकारो लक्ष्यते। अनेन राज्याधिरोहणयोग्यता सूचिता।

समासः—सर्वे च ते गुणाः सर्वगुणाः, तैरुपेतः संयुत इति सर्वगुणोपेतः। वर्धयतीति वर्धनः, आनन्दं वर्धयतीति आनन्दवर्धनः, कौस-

*तथैवोक्तं भारतीयानुशासनपर्वणि ३४ अध्याये—
'स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै।
तस्मात्ते शक्र! जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥४७॥'

ल्याया आनन्दवर्धन इति कौसल्यानन्दवर्धनः।

वाच्यान्तरम्—सर्वगुणोपेतेन रामेण भूयते।

कोषः—स्यादानंदथुरानन्दः शर्मशातसुखानि चेत्यमरः।

हिमवान् हिमशैलस्तु प्रालेयाद्रिर्हिमालय इत्यमरः।

सारार्थः—सकलसद्गुणालङ्कृतो निजजननीमोदकरोऽसौ रामः समुद्र इव गम्भीरः, हिमालय इव धैर्यवानस्ति।

भाषार्थः—हर एक गुणों से भरे हुए, कौसल्या (अपनी माय) के हर्ष को बढ़ाने वाले, वह रामजी, समुद्र के सदृश गम्भीर हैं; अर्थात् जैसे समुद्र का थाह कोई नहीं पाता, वैसे रामजी के हृदय का भी गुप्त विचार को कोई नहीं जान सकता। और धैर्य में हिमालय के समान हैं, अर्थात् जैसे हर समय वर्फ से पीड़ित होने पर भी हिमाचल तिल भर नहीं डोलता, वैसे अनेक कार्य भार से रामजी भी हिचकते नहीं ॥१७॥

**विष्णुना सदृशो वीर्ये, सोमवत्प्रियदर्शनः।**
**कालाग्निसदृशः क्रोधे, क्षमया पृथिवीसमः ॥१८॥**

अन्वयः—वीर्ये विष्णुना सदृशः, सोमवत् प्रियदर्शनः, क्रोधे कालाग्निसदृशः, क्षमया पृथिवीसमः, अस्ति।

व्याख्या—वीर्ये = विक्रमे, युद्धाद्यवसरे प्राप्ते सतीत्यर्थः। विष्णुना = नारायणेन, सदृशः = समः, यथा ये येऽन्यदेवजयिनो दैत्यास्ते ते विष्णुनैव नाशितास्तथैव सकलदेवदुर्जया अपि दानवा रामेण पराजिता भवन्ति। सोमवत् = चन्द्रवत्, प्रियदर्शनः = नयनाकर्षकः, यथैवान्यपदार्थावलोकनाभिलाषवानपि जनः प्रमादेनापि नयनगोचरीभूतं प्रतिदिनदृष्टमपि चन्द्रबिम्बं क्षणं पश्यत्येव, तथैव दृष्टरामचन्द्रेणापि जनेन रामो भूयः सादरमेवालोक्यते इति भावः। क्रोधे = क्रोधावसरे, युद्धादौ, कालाग्निसदृशः = प्रलयाग्नितुल्यः, यथा प्रलयसमये वह्निः परितो युगपत् ज्वलज्ज्वालाजालैर्भूस्थान् पदार्थान् भस्मीकरोति, तथैवायं रामोऽपि परितो मोचितैर्बाणैः प्रतिपक्षिणं क्षणमेव नाशयति। क्षमया = शान्त्या, पृथिवीसमः = धरणीसदृशः। यथा पृथिव्यां लोकाः स्वसुखसिद्ध्यै कर्षणखननचलनाद्युपद्रवान् कुर्वन्ति, परन्तु ज्ञात्वाऽपि तान् सा न किमपि प्रतीकारं कर्तुमिच्छति,

प्रत्युत स्वव्यथामपि न प्रकटीकरोति, तथैव सदाऽयं रामोऽपि स्वसुखनिरपेक्षः परसुखलाभाय सहनशीलः सन् यतते।

समासः—प्रियं दर्शनमवलोकनं यस्य सः। कालस्य प्रलयसमयस्य अग्निः कालाग्निः, कालाग्निना सदृश इति कालाग्निसदृशः। पृथिव्या समः पृथिवीसमः।

वाच्यान्तरम्—वीर्यें विष्णुना सदृशेन, सोमवत्प्रियदर्शनेन, क्रोधे कालाग्निसदृशेन, क्षमया पृथिवीसमेन भूयते।

कोषः—विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवा इत्यमरः।
वाच्यलिङ्गसमस्तुल्यः सदृक्षः सदृशः सम इत्यमरः।
वीर्यं बले प्रभावे चेत्यमरः।
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिरित्यमरः।
शान्तिः क्षमा तितिक्षा चेत्यमरः।
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी महीत्यमरः।

सारार्थः—विष्णुसमः पराक्रमे, दर्शने चन्द्रवदाह्लादकः, क्रोधे प्रलयाग्निरिव, सर्वध्वंसकः, शान्तौ पृथ्वीसमोऽस्ति।

भाषाऽर्थः—वह राम पराक्रम में विष्णु के समान, देखने में चन्द्रमा के ऐसे, क्रोध के समय प्रलयकाल के अग्नि के बराबर, और सहनशीलता में पृथिवी के समान हैं ॥१८॥

**धनदेन समस्त्यागे, सत्ये धर्म इवापरः।**

अन्वयः—त्यागे धनदेन समः, सत्ये अपरः धर्म इव (स हि रामो-विद्यते इति शेषः)।

व्याख्या—त्यागे = धनवितरणे = दाने, धनदेन = कुवेरेण, समः = सदृशः = समानः, सत्ये = सत्यव्यवहारे, अपरः = द्वितीयः, धर्म इव, रामस्तु देहधारी धर्म एव, तथोक्तम् "रामो विग्रहवान् धर्मः" इति। वा असत्ये = असत्यपालके जने, अपरः अधर्म इव = क्रूर इव, अर्थात् पापिनां दण्डदाने महानदयः, एतत्पर्यन्तमेव बालकाण्डीया कथा वर्त्तते, अतः परमयोध्याकाण्डस्य कथाऽस्ति।

समासः—धनं ददातीति धनदस्तेन।

वाच्यान्तरम्—त्यागे धनदेन समेन, सत्ये अपरेण धर्मेण इव, तेन रामेण भूयते।

कोषः—मनुष्यधर्मा धनदो राजराजो धनाधिप इत्यमरः ।
त्यागो विहापनं दानमुत्सर्जनविसर्जने इत्यमरः ।
सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति, इत्यमरः ।
स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष इत्यमरः ।

सारार्थः—स रामः कुवेर इव दानशीलः, शरीरी धर्म इव सत्यप्रयोक्ताऽस्नीति ।

भाषाऽर्थः—वह रामचन्द्र, दान में तो राजराज कुवेर के समान, सत्य व्यवहार में साक्षात् दूसरे धर्म ही हैं ।

इति बालकाण्डकथा ।

---

## अथायोध्याकाण्डकथाबीजम् ।

तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ॥१६॥
ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।
प्रकृतीनां हितैर्युक्तं, प्रकृतिप्रियकाम्यया ॥२०॥
यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ।

अन्वयः—महीपतिः, दशरथः, सत्यपराक्रमं, ज्येष्ठं, ज्येष्ठगुणैर्युक्तं, प्रकृतीनां हितैः युक्तं, एवं गुणसम्पन्नं प्रियं सुतं तं रामं, प्रकृतिप्रियकाम्यया प्रीत्या यौवराज्येन संयोक्तुं ऐच्छत् ।

व्याख्या—महीपतिः = सकलपृथ्वीपालकः = भूपः, दशरथः = एतन्नामकः, सत्यपराक्रमम् = अव्यर्थविक्रमम्, * ज्येष्ठम् = चतुर्ष्वपि भ्रातृषु पूर्वजम्, ज्येष्ठगुणैः = सर्वश्लाघ्यगुणैः = यौवराज्योचितगुणैः, युक्तम् = समन्वितम्; प्रकृतीनां = प्रजानां, हितैः = कल्याणकरोपायैः, युक्तम् = सहितम्, एवं = पूर्वोक्तवर्णनानुसारं, गुणसम्पन्नम् = शौर्यौदार्यगाम्भीर्यादिपूर्णम्, प्रियम् = प्रेमपात्रम्, सुतम् = पुत्रं, तं, रामम् = एतन्नामकम्, प्रकृतिप्रियकाम्यया = अमात्यादिजनप्रीति-

---

* सर्वज्येष्ठो रामस्तदनुजो भरतः, तदनुजो लक्ष्मणः, तदनुजः शत्रुघ्न एवं जन्मक्रमस्तेषाम् ।

करणेच्छया, अनेन 'रामो राजा भवतु, इति प्रजाभिलाषः सूचितः। प्रीत्या = स्वप्रीत्या च, यौवराज्येन = नवभूपतित्वेन, संयोक्तुम् = संयोजयितुम्, ऐच्छत् = अभिलषितवान्।

समासः—गुणैः दयादाक्षिण्यादिभिः सम्पन्नमिति गुणसम्पन्नम्। सत्यःपराक्रमो यस्य असौ। ज्येष्ठाः श्रेष्ठा गुणा इति ज्येष्ठगुणास्तैः, वा ज्येष्ठानां पूर्वजोचितानां गुणा इति तैः। दशसु दिक्षु रथः अप्रतिहतो यस्य सः दशरथः। प्रियस्य काम्या प्रियकाम्या, प्रकृतीनां प्रियकाम्या प्रकृतिप्रियकाम्या, तया, प्रकृतिप्रियकाम्यया। युवा राजा युवराजस्तस्य भावो यौवराज्यम्, तेन यौवराज्येन, मह्याः पृथिव्याः पतिर्महीपतिः।

व्याकरणम्—सम्पन्नं = सम् + पद् + क्तः। युक्तम् = युज् + क्तः। ऐच्छत् = इष् + लङ्।

वाच्यान्तरम्—दशरथेन एवंगुणसम्पन्नः सुतो रामो यौवराज्येन संयोक्तुम् ऐष्यत।

कोषः—प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे।
छन्दः कारणगुह्येषु जन्मामात्यादिमातृषु इति वैजयन्ती।

सारार्थः—दशरथ एवं सकलसद्गुणगणालंकृतं ज्येष्ठपुत्रं राममभात्याद्यनुरोधेन, स्वसौहार्देन च यौवराज्येन संयोजयितुमभिलषितवान्।

भाषार्थः—महाराज दशरथ जी, दृढ़प्रतिज्ञ, और सब पुत्रों में बड़े-बड़ों के सब गुणों से भूषित, प्रजाओं के उपकार में तत्पर, ऐसे पहले के गुणों से अलंकृत प्यारे पुत्र रामचन्द्रजी को मन्त्रियों के अनुरोध से और अपने विचार से भी युवराज बनाने के लिये चाहा ॥१९॥२०॥

तस्याभिषेकसंभारान् दृष्ट्वा भार्याऽथ कैकयी ॥२१॥
पूर्वं दत्तवरा देवी वरमेनमयाचत।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥२२॥

अन्वयः—अथ पूर्वं, दत्तवरा भार्या देवी कैकयी, तस्य अभिषेकसंभारान् दृष्ट्वा, रामस्य विवासनं, भरतस्य अभिषेचनं च, एनं वरं अयाचत।

व्याख्या—अथ = अनन्तरम्, पूर्वं = प्रथमं, दत्तवरा = गृहीताभिलाषा, पूर्वस्मिन् समये इन्द्रसहायार्थं प्रवृत्तस्य दशरथस्य दैत्यैर्युद्धे जाते, दैत्यप्रयुक्तामासुरीमायां धवलाङ्गमुनिदत्तया विद्यया निवारयित्र्यै कैकेय्यै, तुष्टेन दशरथेन दत्तौ वरौ इति कथाऽस्ति। भार्या भर्त्तुं योग्या = जाया, कैकयी = एतन्नामिका, केकयस्य केकयदेशानां राज्ञोऽपत्यं स्त्री कैकयी, दशरथस्य राज्ञः *कनीयसी स्त्री, कुत्रचित् मध्यमा स्त्रीत्युक्तं तच्च, तस्य = रामस्य, अभिषेकसंभारान् = राज्याभिषेकोपकरणानि, दध्यक्षतदूर्वाच्छत्रचामरादीनीतिशेषः। दृष्ट्वा = मन्थराचेटीवचनोपदेशात् स्वार्थान्धनयनेन विलोक्य, तथा सञ्जाते स्वार्थहानिं विचिन्त्य, स्वार्थसंसाधनाय पूर्वस्वीकृतवरद्वयं स्मृत्वा, प्रसन्ना भूत्वा, एनं = दशरथं प्रति, रामस्य = यौवराज्यार्थमुद्योजितस्य, विवासनम् = राज्यादुद्वासनम्, रामश्चतुर्दश वर्षाणि राज्यं विहाय वने गच्छतु इत्येवमेकम्, तथा च भरतस्य = एतन्नामकस्य निजात्मजस्य, तत्काले मातामहनगरस्थस्य, अभिषेचनं = राज्याभिषेचनमित्येवं द्वितीयं, वरम् = मनोरथं, अयाचत अर्थितवती।

समासः—अभिषेकस्य संभाराः अभिषेकसंभारास्तानभिषेकसंभारान्। दत्तौ अर्पितौ वरौ यस्यै सा दत्तवरा।

व्याकरणम्—दृष्ट्वा = दृश् + क्त्वा। अयाचत = याच् + लङ्।

वाच्यान्तरम्—कैकेय्या एष दशरथो वरमयाच्यत।

कोषः—अभिषेकोऽभिषेचनम्।

निष्कासनं निर्गमनं निष्क्रमणं विवासनमितिकोषः।

सारार्थः—स्वपरिचारिकायाः मन्थराया उक्त्या रामस्य राज्याभिषेकोत्सवंश्रुत्वा, तस्या एवाग्रहेण परिवर्त्तितमतिः सा भरतमाता कैकयी रामे भूमिपतौ सति, स्वपुत्रस्य भूपतित्वाभावेन पुत्रस्नेहवशीभूता, तत्क्षणे पूर्वप्रवृत्तशम्बरसमरोपकृतिकरणोपार्जितौ दशरथाद्वरौ स्मृ

* तथा चोक्तं वा० का० १६ सर्गे—पायसदानक्रमेण ज्येष्ठकनिष्ठत्वम्। एवञ्च शृङ्गवेरपुरे सुमन्त्रप्रत्यावर्त्तनसमये रामोक्तिः—

'नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी।
कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः॥'

एकत्र कुत्रचित् 'मध्यमाऽम्बा' इति वर्त्तते, परन्तु तत्रैतत्स्त्रीत्रितयेतरसाधारणस्त्रीजनापेक्षयोक्तमिति।

त्वा तयोरेकं 'रामस्य चतुर्दशवर्षावधि वनवास"-इति, द्वितीयं तु "मत्पुत्रो युवराजो—भवत्विति, स्वपतेः सकाशात् याचितवतीति ।

भाषाऽर्थः—महाराज दशरथ की छोटी रानी केकयी ने अपनी नौड़ी मन्थरा के बार बार मन बहकाने वाली बातों से, राम के लिये राज्याभिषेक को समझ कर, तुरत कभी पहले देवासुरसंग्राममें अपने पति से पाये दो वरों को याद कर, उस में से एक वर तो 'राम को चौदह वर्ष वनवास, और दूसरा 'अपने पुत्र भरत को राज्य, मांगती भई

यहां परम्परा से यह कथा है कि एक समय देवता के तरफ से दानव से दशरथ लड़ते थे, उस समय दशरथ के ऊपर आसुरी माया फैलती हुई देख कैकेयी ने खुद दानव से लड़कर माया को नष्ट कर दी, और अपने पति को बचायी, तब खुश होकर दशरथ दो बरदान दिये थे, वे बांकी ही थे ॥२१॥२२॥

1954 IInd paper 2. (c) page 27

स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥२३॥

अन्वयः—सत्यवचनात् धर्मपाशेन संयतः सः राजा दशरथः, प्रियं सुतं रामं विवासयामास ।

व्याख्या—सत्यवचनात् = सत्यभाषणव्रतात्, यद्वदति तत्करोत्येवं-नियमात्, धर्मपाशेन = पूर्वाङ्गीकृतवरदानद्वयदाम्ना, संयतः = गाढं नियन्त्रितः, सः = रामाभिषेकविघ्नप्रहारमूर्च्छितः, राजा = असमर्पित-रामराज्यभारः, वा सर्वरञ्जकः दशरथः, प्रियं = प्राणेभ्योऽपि प्रेमभाजनं, सुतं = पुत्रं, रामं, विवासयामास प्रस्थापयामास ।

समासः—सत्यं तथ्यं च तद्वचनं सत्यवचनं, तस्मात् । धर्म एव पाशो धर्मपाशः तेन धर्मपाशेन ।

व्याकरणम्— संयतः = सम् + यम् + क्तः । विवासयामास = वि + वासि + लिट् ।

वाच्यान्तरम्—राज्ञा दशरथेन रामो विवासयामासे ।

कोषः—नियन्त्रितः संयतः स्यादिति ।

सारार्थः—राजा दशरथः, पूर्वाङ्गीकृतवचनपालनार्थं, धर्मरक्षण-परवशो भूत्वा प्राणप्रियमपि पुत्रं वनं प्रेषितवान् ।

भाषार्थः—वह राजा दशरथ ने सत्य वचन पालन करने के कारण, धर्म रूप फांस से जकड़ जाने पर, प्यारे पुत्र राम को वन भेजा ॥२३॥

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥२४॥

अन्वयः—वीरः, सः, (रामः) कैकेय्याः प्रियकारणात्, पितुर्वचननिर्देशात् प्रतिज्ञां अनुपालयन् सन् वनं जगाम ।

व्याख्या—वीरः = विरोधिविध्वंसकोऽपि, सः = रामः, कैकेय्याः = कनीयस्या विमातुः, प्रियकारणात् = प्रीतिहेतोः, अर्थात् भवत्याः पुत्रो भरत एव राजा भवतु, तथा चाहं वनमेव गच्छामि" एवमेव चेद्भवती मुदिता भविष्यति, तर्हि भवतु, पुत्रेण मातुरानन्दकरं कर्म ध्रुवं कर्त्तव्यम्, इति हेतोः, पितुः = दशरथस्य, वचननिर्देशात् = आज्ञातः, प्रतिज्ञां = कैकेयीपुरःकृतां, प्रतिज्ञां, अनुपालयन्, वनं = विपिनं, जगाम ।

समासः—वचनस्य निर्देशो वचननिर्देशस्तस्मात् वचननिर्देशात् । प्रियस्य कारणं प्रियकारणम्, तस्मात्प्रियकारणात् ।

व्याकरणम्—जगाम = गम् + लिट् । अनुपालयन् = अनु + पाल् + णिच् + शतृ ।

वाच्यान्तरम्—तेन वीरेण वनं जग्मे ।

कोषः—अटव्यरण्यं विपिनं गहनं काननं वनम्, इत्यमरः ।
विरोधिध्वंसने दक्षो वीर इत्यभिधीयते ।

सारार्थः—कैकेय्याः प्रियकरणहेतवे बद्धवाक्यस्य दशरथस्याज्ञया 'अवश्यमहं चतुर्दशसमा वने वत्स्यामी,–ति प्रतिज्ञां पालयन् रामो वनं जगामेति ।

भाषाऽर्थः—वह वीर रामचन्द्र, कैकेयीके प्रेम-बन्धन में पड़े हुए पिता की आज्ञासे 'अवश्य मैं वन जाता हूँ' इस प्रतिज्ञा को पालन कर वन गये ॥२४॥

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः ॥२५॥

अन्वयः—विनयसम्पन्नः सुमित्रानन्दवर्धनः प्रियः भ्राता लक्ष्मणः, व्रजन्तं तं स्नेहात् अनुजगाम ह ।

व्याख्या—विनयसम्पन्नः = नम्रताऽन्वितः = अनुद्धतः, सुमित्रानन्दवर्धनः = निजजननीमोदवर्धकः, अर्थात् लक्ष्मणो रामेण सह वनं

गच्छति' अनेन सुमित्राया आनन्द एव संवृद्धः, यत उक्तं तया तदवसरे- "रामं दशरथं विद्धि, विद्धि मां जनकात्मजाम्। अयोध्यामटवीं विद्धि गच्छ तात! यथा सुखम्॥" इति। प्रियः = विरहासहिष्णुः। भ्राता = अनुजः, लक्ष्मणः, स्नेहात् = प्रेमतः, नाहमेकाकी स्वजन्मस्थानमपि रामं विना सुखदं मन्ये, यत्रैव रामस्तत्रैव मम ग्राम इति धिया, व्रजन्तं = वनं गच्छन्तं तं रामं, अनुजगाम = अनुचरो भूत्वा प्रस्थितः। अग्रे रामस्तदनु सीता, तत्पृष्ठे लक्ष्मण एवं ते वनं गतवन्तः। अतएव रामोपासकाः स्वललाटे मध्ये रक्तवर्णां च सीतारूपां चन्दनरेखां, तदुभयतः शुक्लवर्णौ रामलक्ष्मणयोरूपबोधकौ, एवं तिलकं कुर्वन्ति।

समासः—विनयेन सौशील्येन सम्पन्नः संयुक्तः इति विनयसम्पन्नः। आनन्दं वर्धयतीति आनन्दवर्धनः सुमित्राया दशरथस्य मध्यमपत्न्या- आनन्दवर्धन इति सुमित्रानन्दवर्धनः।

व्याकरणम्—व्रजन्तं = व्रज्+शतृ। अनुजगाम = अनु + गम्+लिट्।

वाच्यान्तरम्—लक्ष्मणेन सः अनुजग्मे।

कोषः—प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदमित्यमरः।
मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः।
स्यादानन्दथुरानन्दः शर्म शातसुखानि चेत्यमरः।

सारार्थः—विनीतो रामप्रियो लक्ष्मणः स्नेहात् वनं गच्छन्तमपि राम- मनुजगाम, वस्तुतो लक्ष्मणसमो भ्रातृभक्तो न कोऽपि जात इति।

भाषाऽर्थः—विनय से सम्पन्न, सुमित्रा के आनन्द को बढ़ानेवाला, भाय के प्रिय लक्ष्मणजी, वनजाते हुए राम के पीछे चले॥२५॥

**भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्।**

अन्वयः—भ्रातुः दयितः, सौभ्रात्रं, अनुदर्शयन् भ्रातरं अनुजगाम।

व्याख्या—भ्रातुः = रामस्य, दयितः = प्रियः, लक्ष्मणः, सौभ्रात्रं = भ्रातृसौजन्यं दर्शयन् = प्रकटयन्, भ्रातरं = रामं, अनुजगामेति शेषः। रामस्य कैकेयीकृतं वनप्रस्थानं निशम्य क्रुद्धेन लक्ष्मणेन रामं प्रति महदभिन्नहृदयत्वं सूचितम्। पश्चात् रामोपदेशाच्छान्तो भूत्वाऽ- नुगमनमेव कृतं तस्येति सौभ्रात्रम्।

समासः—सुष्ठु भ्राता सुभ्राता, तस्य भावः सौभ्रात्रम्।

व्याकरणम्—अनुदर्शयन् = अनु + दृश् + णिच् + शतृ।

कोष:—दयितः प्रिय इष्टश्चानुकूलोऽभिन्नमानसइति ।

सारार्थः—भ्रातृवत्सलो लक्ष्मणोऽनुजकर्तव्यमनुपालयन् ज्येष्ठ-भ्रातरमनुजगाम ।

भाषाऽर्थः—बड़े भाई राम के परम प्रिय लक्ष्मणजी अच्छे भाई का व्यवहार दिखाते हुए उनके साथ वन चले ।

**रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥२६॥**
**जनकस्य कुले जाता देवमायेव निर्मिता ।**
**सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥२७॥**
**सीताऽप्यनुगता रामं, शशिनं रोहिणी यथा ।**

अन्वयः—रामस्य दयिता भार्या, नित्यं प्राणसमा हिता, जनकस्य कुले जाता, देवमाया इव निर्मिता सर्वलक्षणसम्पन्ना, नारीणां उत्तमा वधूः, सीता अपि, यथा रोहिणी शशिनं (अनुयाति) तथा रामं अनुगता ।

व्याख्या—रामस्य = वनवासश्रवणेनापि रमणीयाकारस्य रामस्य, दयिता - प्रिया, समदुःखसुखेति यावत् । या स्वार्थिनी भवति, सा दुःखावस्थां गतं पतिं नानुचरति, इयं देवी राजप्रासादमपि निर्जन-वनमिव परित्यज्य वनं गच्छन्तमपि पतिमनुप्रस्थितेतिभावः । भार्या = भर्तुं योग्या, यथा रामः साक्षात्परमेश्वरः, तथैवेयमपि परमेश्वरी साक्षादुभयोर्योग्यः समागमः । नित्यं = सदा, प्राणसमा = असुसदृशी, यथोक्तं सुन्दरकाण्डे 'न चास्य माता, न पिता, न चान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा, इति । हिता = कल्याणकारिणी, न कदापि पति-प्रतिकूलव्यापारेति । जनकस्य = सीरध्वजस्य = मिथिलादेशाधिपस्य, कुले = वंशे, जाता = उत्पन्ना, जनितेतिभावः । यद्यपीयमयोनिजा, तथापि जनकस्य देवयज्ञावसरे लांगलविदारिताया भूमेरुत्पन्ना, अतो जन्मनो हेतुरूपस्य कन्या, तत्र सीता लाङ्गलपद्धतिरित्युक्तत्वात्सीता, इति नामापि रक्षितं जनकेन । देवमाया = देवनिर्मितमाया इव निर्मिता, यथा देवदानवसमरे दैत्यनाशाय देवैर्माया निर्मीयते, तथैवेयं रावणवधाय रचितेति । सर्वलक्षणसम्पन्ना = सकलसामुद्रिकोक्त-पातिव्रत्यसौभाग्यचिह्नसंपूर्णा, यथाऽऽदौ रामस्य गुणाः सामुद्रिकोक्ता-उक्तास्तथैवास्या अपि आसन्निति । नारीणाम् = स्त्रीणाम्, उत्तमा =

मुख्या, स्वभावसौन्दर्यादिभिर्नैतत्समा काऽपि तदानीमिति भावः। वधूः = नवविवाहिता, वा दशरथस्नुषा, अनेन तदानीं सीताया अयोध्यायामेवोपस्थितिरुक्ता, ईदृशी सीताऽपि यथा = यद्वत्, रोहिणी = ताराविशेषा, शशिनं = चन्द्रं, अनन्ताकाशे भ्रमन्तमपि अनुयाति, न कदापि तं जहाति, तथैव सा रामं = स्वपतिं, वनं प्रस्थितमपि अनुगता = पृष्ठतः प्रस्थिता, तथोक्तम् "वरिष्ठा सर्वनारीणामेषा दिवि च देवता। रोहिणी न विना चन्द्रं मुहूर्त्तमपि दृश्यते॥" इति।

समासः—प्राणैः असुभिः समा = प्राणसमा,। देवानां माया = देवमाया। सर्वाणि लक्षणानि सर्वलक्षणानि, तैः सम्पन्ना, इति सर्वलक्षणसम्पन्ना।

व्याकरणम्—अनुगता = अनु + गम् + क्तः + टाप्।

वाच्यान्तरम्—रोहिण्या शशीव सीतयाऽपि रामोऽन्वगामि।

कोषः—पूंसि भूम्न्यसवः प्राणा इत्यमरः।

सततेनारताश्रांतसन्तताविरतानिशम्।
नित्यानवरताजस्रमित्यमरः।
चिह्नं लक्ष्म च लक्षणम्, इत्यमरः।
अचिरोढ़ा तु वधूः इति वैजयन्ती।
द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इत्यमरः।
रोहिणी ब्रह्मनक्षत्रं चन्द्रप्राणप्रियाऽपि च।

सारार्थः—यथैवासीमे निरवलम्बे दिवि चन्द्रं रोहिणी अनुव्रजति, तथैव रामस्य प्राणप्रिया सकलशुभचिह्नसमन्विता जानकी रामेण बहुशोविनिवारिताऽपि पातिव्रत्यपालनेच्छया संभावितविविधक्लेशेऽपि वनगमने तमेवानुजगामेति।

भाषाऽर्थः—जैसे आकाश में शीत गर्म के ऊपर खयाल न कर रोहिणी चन्द्रमा के साथ चलती है, वैसे सब शुभ लक्षणों से विभूषित सीता जी, जैसे वनी देवमाया हो, वैसे जनक राजा के यहां उत्पन्न हुई, वन जाते हुए अपने प्राणनाथ रामजी के साथ चली ॥२६॥२७॥

**पौरैरनुगतो दूरं पित्रा दशरथेन च ॥२८॥**
**शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत्।**
**गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥२९॥**

अन्वयः—पौरैः, दूरं अनुगतः, पित्रा दशरथेन च अनुगतः, धर्मात्मा रामः, गङ्गाकूले शृङ्गवेरपुरे प्रियं निषादाधिपतिं गुहं आसाद्य सूतं व्यसर्जयत् ।

व्याख्या—पौरैः = पुरवासिभिः = अयोध्यावासिभिरित्यर्थः। दूरं = दीर्घमार्गं, पित्रा = तातेन, दशरथेन, = एतन्नामकेन, च = अपि, द्वारमात्रम्, अनुगतः = पश्चाच्चलितः,धर्मात्मा = धर्मस्वरूपः, अत्र अपकर्त्तुरप्यनपकारक इति भावः। रामः, गङ्गाकूले = भागीरथीतटे, शृङ्गवेरपुरे = शृङ्गवेरपुरसंज्ञकग्रामे, अधुना आनापुरेति प्रसिद्धे, प्रियं = सुहृदं, निषादाधिपतिम् = मृगघातकस्वामिनम्, गुहम् = एतन्नामानम्, नीचजातिमपि आसाद्य = प्राप्य, सूतं = रथवाहकम्, सुमन्त्रमित्यर्थः, व्यसर्जयत् = व्यसृजत् ।

समासः—पुरि भवाः पौराः, तैः पौरैः। शृङ्गिणः कृष्णसारादयः, तेषां वेराणि प्रतिरूपकाणि, सन्ति यस्मिन् पुरे, तत् शृङ्गिवेरपुरम्, तस्मिन् शृङ्गिवेरपुरे, गङ्गायाः जाह्नव्याः कूलं वेला, वा तटमिति गङ्गाकूलं तस्मिन् गङ्गाकूले। धर्मः आत्मा यस्य सः धर्मात्मा। निषादानां मृगघातिनां अधिपतिः प्रभुरिति निषादाधिपतिस्तं। गोपयति परधनानि, इति गुहस्तम्। प्रीणातीति प्रियस्तं प्रियम्।

व्याकरणम्— अनुगतः = अनु + गम् + क्तः । व्यसर्जयत् = वि + सृज् + णिच् + लङ्। आसाद्य = आ + सद् + णिच् + ल्यप्।

वाच्यान्तरम्—पौरैः पित्रा चानुगतेन रामेण सूतो व्यसर्जि ।

कोषः—सुदूरं दीर्घमायतमित्यमरः।
तातस्तु जनकः पिता इत्यमरः।
प्रतिच्छन्दः प्रतिनिधिर्वेरं सप्रतिरूपकम् इत्यमरः।
पूः स्त्री, पुरीनगर्यौ वा पत्तनं पुटभेदनम् इत्यमरः।
सूतः क्षत्ता च सारथिरित्यमरः।

सारार्थः—यदा रामो लक्ष्मणेन सीतया च सहितो वनगमनायोद्यतस्तदा दशरथाज्ञया सुमन्त्रो रथोपरि तान् संस्थाप्य अयोध्यातो दक्षिणाभिमुखं प्रस्थितस्तदानीं पुत्रवात्सल्यात् किञ्चिद्दूरं दशरथोऽतिशोकशिथिलत्वात् अनुजगाम, पौरास्तु गौतमीतटपर्यन्तमनुगताः, ततो गङ्गातटस्थं शृङ्गिवेरपुरं प्राप्य, तत्र च परमप्रियं भक्तिमन्तं नीचजातिमपि गुहं समधिगम्य, सरथं सारथिं (सुमन्त्रं) प्रत्यावर्त्तयामास ।

भाषाऽर्थः—जब लक्ष्मण, और सीता के साथ राम वन को चले, तब सुमन्त्र उन तीनों को रथ पर चढ़ाय दक्षिण मुह ले चले, तब मूर्च्छित दशरथ अशोक विह्वल होने के कारण कुछ दूर, और पुरवासी लोग दूर तक उन लोगों के पीछा किये, वाद उन पुरवासियों को सोये हुए वहीं छोड़ कर के, गङ्गा किनारे में शृङ्गिवेरपुर पहुँच कर, प्रिय गुह निषाद को पाकर, सुमन्त्र सारथी को लौटा दिये ॥२८॥२९॥

गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३०॥

अन्वयः—गुहेन, लक्ष्मणेन, सीतया च सहितः, रामः, (इति) ते, वनेन वनं गत्वा, बहूदकाः नदीः, तीर्त्वा, (अग्रे गताः ) ।

व्याख्या—गुहेन = एतन्नामकेन, निषादाधिपेन, लक्ष्मणेन = सौमित्रेण, सीतया = जानक्या, च = अपि, सहितः = संयुतः, रामः, इति ते = चत्वारो जनाः, वनेन वनम् = एकस्माद्वनादन्यद्वनं, गत्वा = यात्वा, अनेन तदानीं गङ्गोत्तरभागे विशेषरूपेण वनमासीदिति सूचितम् । तथा च गङ्गातटे पुरं प्राप्तेष्वपि तेषु त्रिषु पुनर्वनाद्वनान्तरगमनदर्शनात् तत्पुरात्पूर्वाभिमुखं तत्तटवर्त्तिवने भ्रमणं सिद्ध्यति, ततः किञ्चिद्दूरे गङ्गोत्तरणाय घट्ट आसीदस्ति चाद्यापि । वा तेवनेन = पादचारेण, बहूदकाः = अगाधसलिलाः, नदीः = धुनीः = गङ्गाधाराः, एकस्या एवानेका धारा आसन् तदानीम्, वाऽऽदरार्थे बहुवचनम् । तीर्त्वा = उत्तीर्य, गङ्गादक्षिणतटं प्राप्येत्यर्थः, गुहं त्यक्त्वा ते भरद्वाजाश्रमं गता इति ।

समासः—बहूनि उदकानि सन्ति यासु ताः बहूदकाः ।

व्याकरणम्—सहितः = सह + इतच् । गत्वा = गम् + क्त्वा । तीर्त्वा = तॄ + क्त्वा । गुहेन लक्ष्मणेन सीतयेत्यत्र सहार्थे तृतीया ।

कोषः—तेवनं पादचारः स्याज्जीला चेति निगद्यते ।
नदी धुनी शैवलिनी स्रवन्ती तटिनी सरित् ।
उदकं सलिलं जलम् इत्यमरः ।

सारार्थः—सीतारामलक्ष्मणा गुहेन सहितास्तदुद्योगेन गङ्गामुत्तीर्य, गुहं तत्रैव त्यक्त्वा, ते भारद्वाजाश्रमं गता इति ।

भाषाऽर्थः—तब गुह के साथ, सीता, राम, लक्ष्मण एक वन से दूसरे वन जाकर, अथाह जल वाली गङ्गाजी की धारा को पार कर, वहीं गुह को छोड़, वे तीनों, भारद्वाज ऋषि के आश्रम गये ॥३०॥

**चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।**
**रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥३१॥**
**देवगन्धर्वसङ्काशास्तत्र ते न्यवसन्सुखम् ।**

अन्वयः—भरद्वाजस्य शासनात् चित्रकूटं अनुप्राप्य, तत्र रममाणाः, देवगन्धर्वसंकाशाः, ते त्रयः रम्यं आवसथं कृत्वा सुखं न्यवसन् ।

व्याख्या—भरद्वाजस्य = तन्नामकस्य मुनेः, शासनात् = उपदेशात्, युष्माकं चित्रकूटे वसतिरुचितेति तत्रैव गच्छतेत्येवमाज्ञाता, चित्रकूटम् = एतन्नामकं पर्वतम्, अनुप्राप्य = द्रुतं संगम्य, तत्र = चित्रकूटे, रममाणाः = विहरन्तः, देवगन्धर्वसंकाशाः = देवगन्धर्वनिभाः, ते = पूर्वोक्ताः, त्रयः = सीतारामलक्ष्मणाः, रम्यं = मनोहरं, आवसथं = पर्णशालारूपं कुटीरम्, कृत्वा = निर्माय, सुखम् = अक्लेशम्, न्यवसन् = निवासं चक्रुः ।

समासः—चित्राणि नानावर्णानि कूटानि शिखराणि वर्त्तन्ते यस्मिन् सश्चित्रकूटः पर्वतस्तं चित्रकूटम् । देवी च देवश्च देवौ, देवौ गन्धर्वश्चेति देवगन्धर्वास्तेषां सङ्काशा इति देवगन्धर्वसङ्काशाः ।

व्याकरणम्—अनुप्राप्य = अनु+प्र+आप्+ल्यप् । कृत्वा = कृ + क्त्वा । न्यवसन् = नि + वस्+लङ् ।

वाच्यान्तरम्—रामादिभिस्त्रिभिः सुखं न्यवासि ।

कोपः—धिष्ण्यमोको निवसनं स्थानावसथ वास्तु चेत्यमरः ।
निभसंकाशनीकाशप्रतीकाशोपमादयः ।

सारार्थः—सीतारामलक्ष्मणाः भरद्वाजमुनेराश्रमं गत्वा तस्योपदेशेन चित्रकूटं गत्वा तत्र रुचिरं निर्वाहयोग्यं पर्णकुटीरं निर्माय, इतस्ततो विहरन्तः सुखमतिष्ठन् ।

भाषाऽर्थः—वे तीनों भारद्वाज मुनि के आश्रम गये, वहां उनकी शिक्षा से, ठहरने के लिए चित्रकूट जाकर, एक, पत्रों से कुटी बनाय, आनन्द से घूमते फिरते रहने लगे ॥३१॥

**चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ॥३२॥**
**राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।**

अन्वयः—रामे चित्रकूटं ( प्रति ) गते ( सति ) तदा पुत्रशोकातुरः राजा दशरथः, सुतं विलपन्, स्वर्गं जगाम ।

व्याख्या—रामे, चित्रकूटम् = तन्नामकगिरिम्, गते = याते, सतीतिशेषः, तदा = तस्मिन्नवसरे, पुत्रशोकातुरः = वृद्धवयःसंजातसुतविच्छेदखेदार्दितः, राजा = पुनरारोपितराज्यभारः, दशरथः, सुतम् = पुत्रम्, हा राम ! हा लक्ष्मण ! हा सीते ! एवं विलपन् = विलापं कुर्वन्, स्वर्गं = दिवं, जगाम = गतः ।

समासः—पुत्रयोः शोकः पुत्रशोकस्तेन पुत्रशोकेन आतुर इति पुत्रशोकातुरः ।

व्याकरणम्—जगाम = गम + लिट् । विलपन् = वि + लप् + शतृ ।

वाच्यान्तरम्—विलपता राज्ञा दशरथेन स्वर्गो जग्मे ।

सारार्थः—सीतारामलक्ष्मणेषु चित्रकूटं गतेषु पुत्रत्यागानुतापपीड़ितो दशरथो विलपन् स्वर्गं जगाम । ततो वसिष्ठादयोऽराजकं राज्यं विज्ञाय केकयदेशात् भरतस्यानयनाय दूतं प्रेषितवन्तः ।

भाषाऽर्थः—जब सीता, राम, लक्ष्मण चित्रकूट को गये, तब पुत्रशोक से अत्यन्त पीड़ित राजा दशरथ, हा राम ! हा लक्ष्मण ! इस तरह विलखते प्राण छोड़ दिये, तब राजाहीन राज्य देख वसिष्ठजी भरत को ननिहाल से लाने को दूत भेजे ॥३२॥

**गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥३३॥**
**नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।**

अन्वयः—तस्मिन् (दशरथे) गते तु वसिष्ठप्रमुखैर्द्विजैः राज्याय नियुज्यमानः, महाबलः भरतः राज्यं न ऐच्छत् ।

व्याख्या—तस्मिन् = दशरथे, गते = पञ्चत्वं प्राप्ते सति, वा तस्मिन् = रामे, गते = वनं याते, वसिष्ठप्रमुखैः = वसिष्ठादिभिः, द्विजैः = ब्राह्मणैः, राज्यरक्तकैरितिभावः, न केवलं तदानीन्तनाः पुरोहिता गुरवश्च स्वोदरपूरणार्थमातुरा आसन्, प्रत्युत राजोपद्रवे स्वोपदेशेन राज्यभारमपि वहन्ति स्म । राज्याय = राज्यं कर्त्तुं, नियुज्यमानः = प्रेर्यमाणः, महाबलः = राज्यभारवहनदक्षः, अपि, भरतः = कैकयीपुत्रः ( यस्यार्थं तन्माता राज्यं वव्रे सः ), राज्यम् = राजत्वम् = राज्यभारम्, न ऐच्छत् = न अभ्यलषत् । उक्तं च तेन—"कथं दशरथाज्जातो भवेद्राज्यापहारकः ?" ।

समासः—वसिष्ठः प्रमुखो मुख्यो येषां ते वसिष्ठप्रमुखास्तैर्वसिष्ठप्रमुखैः, । द्वाभ्यां जन्मसंस्काराभ्यां जायन्ते ये ते द्विजास्तैर्द्विजैः । महत् बलं यस्य सः महाबलः ।

व्याकरणम्—गते = गम् + कर्तरि + क्तः । नियुज्यमानः = नि + युज् + यक् + शानच् । ऐच्छत् = इष् + लङ् ।

वाच्यान्तरम्—नियुज्यमानेन भरतेन राज्यं नैष्यत ।

कोषः—क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।
मुख्यवर्यवरेण्याश्चेत्यमरः ।
दन्तविप्राण्डजा द्विजा इत्यमरः ।

सारार्थः—महाराजे मृते, अराजकतां ज्ञात्वा सत्वरं वसिष्ठादिभिः कैकयदेशस्थो भरतो दूतद्वारा समानीतः, राज्यं कर्त्तुं बहुश उपदिष्टोऽपि भरतो राज्यं नाङ्गीकृतवान्, प्रत्युत स्वमातरं कैकेयीं निनिन्द ।

भाषाऽर्थः—महाराज को मरने के बाद बुलाये गये भरतजी, वसिष्ठ आदि ऋषियों के कहने पर भी राज्य नहीं किये ॥३३॥

**स जगाम वनं वीरो रामपादप्रसादकः ॥३४॥**
**गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।**
**अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥३५॥**
**त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।**

अन्वयः—वीरः, रामपादप्रसादकः, स, वनं, जगाम । आर्यभावपुरस्कृतः स (वनं) गत्वा, महात्मानं, सत्यपराक्रमं, रामं भ्रातरं रामम्, अयाचत् (किमित्याह) त्वम् एव धर्मज्ञः, राजा, इति वचः रामं अब्रवीत् ।

व्याख्या—वीरः = उत्साहवर्धनः, रामपादप्रसादकः = रामचरणसेवकः, स = भरतः, वनं = चित्रकूटोपवनम् , जगाम = प्राप, आर्यभावपुरस्कृतः = विनीतवेषः, वा वसिष्ठादिभिरनुगम्यमानः, स = भरतः, गत्वा = चित्रकूटं प्राप्य, महात्मानम् = महाधियम् , सत्यपराक्रमम् = अन्वर्थविक्रमम् , रामम् , = रमणीयम् , भ्रातरं = पूर्वजम् , रामम् = एतन्नामकम् , अयाचत् = प्रार्थयामास, किमित्याह—त्वम् = भवान् , एव, राजा = राज्यभारवहनयोग्यः, धर्मज्ञः = राजनीतिज्ञः, अर्थात् ज्येष्ठे विद्यमाने कनिष्ठो न राज्यमर्हतीति धर्मवेत्ता असीति शेषः, इति वचः = वचनम् , रामम् प्रति अब्रवीत् ।

समासः—रामस्य पादौ, रामपादौ, तौ प्रसादयति इति रामपादप्रसादकः। वा रामपादप्रसादेन कं सुखं यस्य सः रामपादप्रसादकः। महान् आत्मा यस्य सः महात्मा,तम् = महात्मानम्।
सत्यः पराक्रमो यस्य सः सत्यपराक्रमः। आर्यस्य भाव आर्यभावस्तेन पुरस्कृतः इति आर्यभावपुरस्कृतः। धर्मं जानातीति धर्मज्ञः॥

व्याकरणम्—जगाम = गम् + लिट्। गत्वा = गम् + क्त्वा। अयाचत् = याच् + लङ्। अब्रवीत् = ब्रू + लङ्।

वाच्यान्तरम्—तेन वीरेण वनं जग्मे। तेन महात्मा रामोऽयाचि। रामो वचोऽवोचि च।

कोषः—उत्साहवर्धनो वीर इत्यमरः।
प्रसादस्तु प्रसन्नतेत्यमरः।

सारार्थः—रामस्यैकान्तभक्तो भरतः, वसिष्ठादिभिर्गुरुजनैः, मातृभिश्च सहितो भूत्वा चित्रकूटं गत्वा, त्वमेव राज्याधिकारी, न कुत्रापि ज्येष्ठे विद्यमाने कनिष्ठो राज्यभागिति हेतोरयोध्यां निवर्त्तस्व, इति सविनयं रामं प्रार्थयामास।

भाषाऽर्थः—राम के चरणानुरागी, वीर, भरत ने गुरुजनों के साथ चित्रकूट जाकर, महात्मा राम से राज्य करने के लिये प्रार्थना की॥३४॥३५॥

**रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥३६॥**
**न चैच्छत् पितुरादेशाद्राज्यं, रामो महाबलः।**
**पादुके चास्य राज्याय न्यासं दत्वा पुनः पुनः ॥३७॥**
**निवर्त्तयामास ततो भरतं भरताग्रजः।**

अन्वयः—परमोदारः, सुमुखः, सुमहायशाः, रामः, अपि, पितुः, आदेशात् राज्यं न च ऐच्छत् (अपितु) महाबलः भरताग्रजः रामः अस्य राज्याय न्यासं पादुके दत्वा, ततः पुनः पुनः भरतं, निवर्त्तयामास,।

व्याख्या—परमोदारः = स्वार्थविमुखः, सुमुखः = अम्लानवदनः, प्रसन्नानन इति वा, सुमहायशाः = प्रसिद्धकीर्त्तिः, रामः अपि = प्रार्थितोऽपि बहुशः, पितुः = दशरथस्य, आदेशात् = उपदेशात्, राज्यम्, न च ऐच्छत्, अर्थात् भरतप्रार्थनास्वीकारे पितुः सत्यभङ्गः स्यात्, यद्यपि भरतोऽपि रामस्य प्राणसमः प्रिय आसीत्परन्तु पितुरपेक्षया

लघुभ्रातुः साधारणार्हत्वात् युक्तो विचारो रामस्य । अथ च महाबलः = अपरिमितवीर्यः, भरताग्रजः = भरतज्येष्ठः ( अनेन रामस्य भरतवाक्यानङ्गीकारे न दोषः । भरतस्य रामवाक्यास्वीकारे दोषः सूचितः ) रामः, राज्याय = राज्यप्रचलनाय, अस्य = भरतस्य, पादुके = काष्ठपादुके, न्यासं = स्वप्रतिनिधिरूपं, दत्वा = समर्प्य, ततः = चित्रकूटोपवनात्, पुनः पुनः, = वारं वारं, भरतं, निवर्त्तयामास = पुनः पुनरित्यनेन भरतस्य, राम एव राजा भवत्वित्यर्थे आग्रहः सूच्यते ।

समासः—सुमहत् यशः यस्य सः सुमहायशाः । भरतस्य अग्रजः भरताग्रजः । वा भरतादग्रजो भरताग्रजः ।

व्याकरणम्—ऐच्छत् = इष् + लङ् । दत्वा = दा + क्त्वा । निवर्तयामास = नि + वृत् + णिच् + लिट् ।

वाच्यान्तरम्—रामेणाऽपि राज्यं नैषि । रामेण भरतो निवर्तयाञ्चक्रे ।

कोषः—दक्षिणे सरलोदारावित्यमरः ।

आदेश उपदेशः स्यात् शिक्षाऽनुज्ञानमित्यपि ।

अथ पादुका । पादूरुपानत्स्त्री सैवानुपदीना पदायतेत्यमरः ।

पुमानुपनिधिर्न्यास इत्यमरः ।

सारार्थः—भरतेन भूयो भूयो राज्याय प्रार्थितोऽपि रामः पितुरादेशपालनव्रतभङ्गभिया राज्यं नाङ्गीकृतवान्, तथा च भरतस्याग्रहनिर्वाहार्थं निजपादुके राज्यन्यासाय दत्ते, यदस्योपरि राज्यभारं समर्प्य ततः स्वयं राज्यं कुर्विति संबोध्य भरतं रामो निवर्त्तयामास ।

भाषाऽर्थः—अत्यन्त उदार, बड़े यशस्वी, प्रसन्नवदन, अतिबलवान् राम जी, पिता जी की आज्ञा रक्षा करने के लिये, भरत का हठ न मान, अपने प्रतिनिधि में पादुका ( खराम ) दिये, जो कि इस पर राज्यभार समर्पण कर पीछे खुद सब काज चलाना, यह कह, भरत जी को वारं वार अयोध्या को लौटाये ॥३६॥३७॥

स काममनवाप्यैव रामपादावुपस्पृशन् ॥३८॥
*नन्दिग्रामेऽकरोद्राज्यं, रामागमनकांक्षया ।

---

* क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥लं० का० १२५ सर्ग ।

अन्वयः—स कामं, अनवाप्य एव, रामपादौ उपस्पृशन्, रामागमनकांक्षया, नन्दिग्रामे, राज्यं, अकरोत्।

व्याख्या—स = भरतः, कामम् = अभिलाषम् = रामानयनरूपम्, अनवाप्य = अप्राप्य, बहुशो यत्ने कृतेऽपि स्वमनोरथासिद्धिं ज्ञात्वा तत्पादुके आदरेणादाय सर्वनाशात्स्वल्पनाशोऽपि वरमिति न्यायात्, रामपादौ = रामपादोपनिहितपादुके, उपस्पृशन् = राज्यकार्यं निवेदयन् सन्, नन्दिग्रामे = एतन्नामके ग्रामे, अयोध्यातो दक्षिणस्यां दिशि क्रोशान्तरिते इत्यर्थः। रामागमनकांक्षया = रामागमनसमयप्रतीक्षया, यावच्चतुर्दश वर्षाणि रामो वनान्नागमिष्यति, तावदहमत्रैव स्थित्वा तदादेशेन सर्वं सम्पादयिष्यामि, नाहमयोध्यां गमिष्याम्येकाकी, रामलक्ष्मणाभ्यां सहैव यास्यामि तत्रेति भरतस्यापूर्वो विचारः।

समासः—रामस्य पादौ रामपादौ। आगमनस्याकांक्षा आगमनाकांक्षा, रामस्य आगमनाकांक्षा इति रामागमनाकांक्षा, तया रामागमनकांक्षया।

कोपः—कामोऽभिलाषः कन्दर्पश्चेति विश्वः।

सारार्थः—भरतस्तु रामप्रत्यानयनरूपं स्वमनोरथमलब्ध्वाऽन्ते तत्पादुके अपि गृहीत्वा 'विना राममयोध्यां नाहं गमिष्यामि' इति निश्चित्यायोध्याद्दक्षिणभागे वर्त्तमाने नन्दिग्रामे स्वनिवासं कृत्वा तत्पादुकयोरुपरि राज्यभारं समर्प्य, पश्चात् स्वयं सर्वं सम्पाद्य तत्रैव स्थितः।

भाषाऽर्थः—वह भरतजी 'रामजी को जरूर लौटाऊंगा' यह मनोरथ न पाकर, 'जब तक रामजी न आवेंगे, मैं अयोध्या नहीं जाऊंगा, यह नियम कर नन्दिग्रामही में रामपादुका पर राजकार्य निर्भर कर पीछे खुद राज काज चलाते हुए ठहरे ॥३८॥

गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥३९॥
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च।
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥४०॥

अन्वयः—भरते गते तु, श्रीमान्, सत्यसन्धः, जितेन्द्रियः, रामस्तु (तत्र) नागरस्य, जनस्य, पुनः, आगमनं, आलक्ष्य, एकाग्रः सन्, दण्डकान् प्रविवेश ह।

व्याख्या—भरते = कैकयीपुत्रे, तु, गते = याते = चित्रकूटात्प्रस्थिते, श्रीमान् = शोभावान्, सत्यसन्धः = सत्यप्रतिज्ञः, अतएव जितेन्द्रियः = वशीकृतेन्द्रियगणः, एकाग्रः = स्थिरलक्ष्यः, वा सज्ञः, रामस्तु = रामोऽपि, तत्र = चित्रकूटे, नागरस्य = अयोध्यावासिनः, वा चित्रकूटनिकटवर्त्तिग्रामनिवासिनः, जनस्य च, पुनः = द्वितीयतृतीयादिवारम्, आगमनम्, आलक्ष्य = आलोच्य, दण्डकान् = दण्डकारण्यानि, प्रविवेश = अन्तर्ययौ ।

समासः—सत्या सन्धा यस्य सः सत्यसन्धः । जितानि इन्द्रियाणि येन सः जितेन्द्रियः । नगरे भवोनागरः तस्य नागरस्य ।

व्याकरणम्— गते = गम् + कर्तरि + क्तः । आलक्ष्य = आ + लक्ष् + ल्यप् । प्रविवेश = प्रविश् + लिट् ।

वाच्यान्तरम्—रामेण दण्डकाः प्रविविशिरे ।

कोषः—सन्धा प्रतिज्ञा मर्यादा इत्यमरः ।

हृषीकं विषयीन्द्रियमित्यमरः ।

ग्रामस्तु नगरं पुरमित्यमरः ।

सारार्थः—चित्रकूटाद्भरते प्रस्थिते रामस्तत्र स्वदर्शनमिलनार्थिनां संमर्दं भावि विचार्य दण्डकारण्यं सपरिजनः प्रविवेश । उचितमेवैतदेकान्तवासप्रियत्वं मनस्विनः ।

भाषार्थः—चित्रकूट से जब भरत जी चले आये, तब वहां से सपरिवार रामजी भी, फिर अपने देश वासी लोगों का वहां आना समझ कर, दण्डकारण्य को चले ॥३९॥४०॥

**प्रविश्य तु महारण्यं रामो राजीवलोचनः ।**
**विराधं राक्षसं हत्वा, शरभङ्गं ददर्श ह ॥४१॥**
**सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ।**

अन्वयः—राजीवलोचनः, रामः, महारण्यं तु प्रविश्य, विराधं राक्षसं हत्वा, शरभङ्गं; सुतीक्ष्णं च अगस्त्यं च अपि तथा अगस्त्यभ्रातरं च ददर्श ह ।

व्याख्या—राजीवलोचनः = कमलनयनः, रामः = प्रसिद्धः, महारण्यं = दण्डकवनं, प्रविश्य = प्रवेशं कृत्वा, राक्षसं = कौणपं, विराधम् = एतन्नामकं, हत्वा = मारयित्वा, शरभङ्गं = एतन्नामकं मुनिवि-

शेषं, तथा च सुतीक्ष्णं = एतन्नामकं मुनिम्, अगस्त्यम् = एतन्नामकं समुद्रशोषकं मुनिमपि, तथा अगस्त्यभ्रातरम् = सुदर्शननामानं, च ददर्श, तथाचोक्तं सनत्कुमारसंहितायाम् 'यवीयानेष मे भ्राता सुदर्शन इति स्मृत'—इति।

समासः—राजीवे इव लोचने यस्य सः। अगस्त्यस्य भ्राता अगस्त्यभ्राता, तं अगस्त्यभ्रातरम्।

व्याकरणम्—प्रविश्य = प्र + विश् + ल्यप्। हत्वा = हन् + क्त्वा। ददर्श = दृश् + लिट्।

वाच्यान्तरम्—रामेण शरभङ्गादयो ददृशिरे।

कोषः—पङ्केरुहं तामरसं सारसं सरसीरुहम्।
विसप्रसूनराजीवपुष्कराम्भोरुहाणि चेत्यमरः।
राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आसर इत्यमरः।
अगस्त्यः कुम्भसंभव इत्यमरः।

सारार्थः—कमललोचनो रामो दण्डकारण्यं प्रविश्य विराधनामकं राक्षसं हत्वा शरभङ्गसुतीक्ष्णागस्त्यतद्भ्रातॄन् ददर्शेति।

भाषाऽर्थः—कमल नयन श्री रामजी, दण्डक वनमें घूस कर, विराध को मार कर, शरभङ्ग, सुतीक्ष्ण, अगस्त्य, सुदर्शन आदि मुनियों के दर्शन किये ॥ ४१ ॥

**अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२ ॥**
**खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ।**

अन्वयः—परमप्रीतः, अगस्त्यवचनात् च एव ऐन्द्रं शरासनम्, खड्गं च अक्षयसायकौ तूणी च जग्राह।

व्याख्या—परमप्रीतः = अतिप्रसन्नः, ऋषीणां दर्शनादुपदेशाच्चेत्यर्थः। अगस्त्यवचनात् = अगस्त्यवाक्यात् एव, ऐन्द्रं = इन्द्रसम्बन्धि, शरासनम् = धनुः, तथा ऐन्द्रमेव, खड्गं = चन्द्रहासं, ऐन्द्रौ, एव अक्षयसायकौ = अव्ययशरौ, तूणी = निषङ्गौ च, जग्राह = स्वीकृतवान्।

समासः—अगस्त्यस्य वचनं अगस्त्यवचनम्, तस्मात् अगस्त्यवचनात्। परमश्चासौ प्रीतः परमप्रीतः, अक्षयाः सायकाः शराः ययोस्तौ अक्षयसायकौ।

व्याकरणम्—जग्राह = ग्रह् + लिट्।

वाच्यान्तरम्—रामेण ऐन्द्रः शराशनो जगृहे ।

कोषः—शरासनं धनुश्चापौ कोदण्डं कार्मुकं तथेति सरस्वती ।

खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय इत्यमरः ।

तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोरित्यमरः ।

सारार्थः—अगस्त्यमुनेरुपदेशात् परमसन्तुष्टः इन्द्रस्य सम्बन्धि धनुः, खड्गं, अक्षयशरौ तूणीरौ च जग्राह ।

भाषाऽर्थः—अत्यन्त प्रसन्न रामजी, अगस्त्यजी के कहने से, इन्द्र के धनुष और तलवार, अक्षयशर वाले तूणीर को भी ग्रहण किये ॥४२॥

**वसतस्तस्य रामस्य वने वनचरैः सह ॥ ४३ ॥**
**ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ।**

अन्वयः—सर्वे ऋषयः वने वनचरैः सह वसतः तस्य रामस्य, (स्थाने) असुररक्षसाम्, वधाय अभ्यागमन् ।

व्याख्या—सर्वे = सकलाः, ऋषयः = शरभङ्गादयः, वने = कानने, वनचरैः = वानप्रस्थैः, सह = साकम्, वसतः = तिष्ठतः, तस्य = पूर्वोक्तस्य, रामस्य, स्थाने, असुरराक्षसां = असुराः कबन्धादयः, रक्षांसि खरादयः, तेषां, वधाय = हननाय = तेषां हननं कुरु इति निवेदनाय अभ्यागमन् = समागता इति ।

समासः—वने चरन्तीति वनचरास्तै र्वनचरैः । असुराश्च रक्षांसि चासुररक्षांसि, तेषाम् असुरक्षसाम् ।

व्याकरणम्—वसतः = वस् + शतृ + ङस् । अभ्यागमन् = अभि + आगम् + लुङ् ।

वाच्यान्तरम्—सर्वैः ऋषिभिः अभ्याजग्मे ।

कोषः—तपः क्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः ।

ऋषयः सत्यवचस इत्यमरः ।

असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा इत्यमरः ।

यातुधानः पुण्यजनो नैऋतो यातु रक्षसी इत्यमरः ।

सारार्थः—वनचरैः सह वने निवसतो रामस्याश्रमे दैत्यानां नाशविधानाय सर्वे ऋषयः समागताः ।

भाषाऽर्थः—वन में वनवासियों के साथ रहते हुए राम जी के पास दैत्य दानवों के संहार के लिये ऋषि लोग गये ॥ ४३ ॥

स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥४४॥
प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥४५॥

अन्वयः—तदा स वने तेषां राक्षसानां (वधं) प्रतिशुश्राव। रामेण च अग्निकल्पानां दण्डकारण्यवासिनाम् ऋषीणाम् (समीपे एव) संयति रक्षसां वधः प्रतिज्ञातः।

व्याख्या—तदा = ऋषीणामागमनानन्तरम्, सः = रामः, वने = विपिने = दण्डकारण्ये, तेषां राक्षसानां विराधादीनां, प्रतिशुश्राव = प्रतिजज्ञे। रामेण च, संयति = युद्धे, रक्षसां = रजनीचराणां, वधः = नाशः, च अग्निकल्पानां = अग्निसदृशतेजोवताम्, दण्डकारण्यवासिनाम् = दण्डकवनवासिनां, ऋषीणां = सत्यवचसां, पुरत एव प्रतिज्ञातः। अर्थात् मुनीनामग्रे एव दैत्यसंहाराय प्रतिज्ञा रामेण कृता।

समासः—अग्नेः कल्पाः प्रतिरूपा इति अग्निरूपाः। दण्डकारण्ये वसन्तीति दण्डकारण्यवासिनः, तेषां दण्डकारण्यवासिनाम्।

व्याकरणम्—प्रतिशुश्राव = प्रति + श्रु + लिट्। प्रतिज्ञातः = प्रति + ज्ञा + क्तः।

वाच्यान्तरम्—तेन प्रतिशुश्रुवे। रामो राक्षसां वधं प्रत्यज्ञासीत्।

कोषः—आश्रवः सङ्गरः सन्धाः प्रतिश्रवः संश्रयः प्रतिज्ञा चेति हलायुधः।
समुदायः स्त्रियां संयुत् समित्याजिसमिद्युध इत्यमरः।

सारार्थः—मुनीनां समक्षमेव राक्षसहननस्य प्रतिज्ञा रामेण कृतेति।

भाषाऽर्थः—तब दण्डक वन में मुनियों के सामने, राम ने दैत्यों के संहार करने की प्रतिज्ञा की ॥४४॥४५॥

तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥४६॥

अन्वयः—तत्रैव वसता तेन, जनस्थाननिवासिनी, कामरूपिणी राक्षसी शूर्पणखा, विरूपिता।

व्याख्या—तत्र = दण्डकारण्ये, एव, वसता = तिष्ठता, तेन = रामेण (वस्तुतो रामानुज्ञातलक्ष्मणेन) कामरूपिणी—स्वेच्छारू-

पिणी, राक्षसी = रात्रिचरी, शूर्पणखा = तन्नामिका रावणभगिनी विरूपिता = नासिकाच्छेदेन कुत्सितरूपं प्रापिता ।

समासः—जनस्थाने रावणसैन्यनिवासे निवसतीति जनस्थाननिवासिनी । कामम् = स्वेच्छारूपम्, रूपं यस्याः सा कामरूपिणी । शूर्पा इव उत्ताना नखा यस्याः सा शूर्पणखा ।

वाच्यान्तरम्—स रामो वसन् शूर्पणखां व्यरूपयत् ।

सारार्थः—एकदा दैवात् शूर्पणखा राममतिमनोहरं विलोक्य कामार्त्ता भूत्वा तं विवाहार्थं प्रार्थितवती । परन्तु तत्प्रार्थनामनादृत्य दूरं गच्छेति कथिता सीतामेव भक्षणार्थं धाविता । तथाविधामुपद्रवकरीं शूर्पणखां दृष्ट्वा 'दुष्टाय दण्डो दातव्य' इति धिया लक्ष्मणमादिश्य नासाच्छेदनं कारितवान् ।

भाषाऽर्थः—वहँ दण्डकारण्य में रहने वाली नाना रूपधारण करने वाली राक्षसी शूपणखा को, राम जी के हुकुम से, लक्ष्मण जी ने विरूप ( नासाछेदन ) किये ॥४६॥

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥४७॥
निजघान रणे रामस्तेषां चैव पदानुगान् ।

अन्वयः—ततः रामः, शूर्पणखावाक्यात् उद्युक्तान् सर्वराक्षसान्, खरं, त्रिशिरसं चैव, दूषणं राक्षसं चैव, तेषां पदानुगान्, च, एव रणे निजघान ।

व्याख्या—ततः = शूर्पणखाविरूपकरणानन्तरम्, रामः = एकाकी एव, शूर्पणखावाक्यात् = शूर्पणखाधिक्काररूपात्, सर्वे यूयं नपुंसकाः कथमन्यथा युष्मत्सु जीवितेषु वो भगिन्या मम ईदृशी दशा स्यात् साऽपि तापसनरेण कृता, अहह, सर्वथा राक्षसकुले नहि विद्यन्ते केऽपि साम्प्रतं वीराः कुलमर्यादापालका एवं, उद्युक्तान् = कृतयुद्धोद्योगान्, सर्वराक्षसान् = सकलरजनीचरान्, तथा तेषु प्रधानं खरं, त्रिशिरसं, चैव दूषणम् = तन्नामकम्, राक्षसं चैव, तथा तेषाम् = खरादीनाम् पदानुगान् = चरणानुचरान् = चतुर्दशसहस्रसंख्यकान् चैव, रणे = समरे, निजघान = हतवान् ।

समासः—शूर्पणखायाः वाक्यं शूर्पणखावाक्यम्, तस्मात् शूर्पणखा-

वाक्यात्, सव च राक्षसाः सर्वराक्षसाः, तान्। पदस्य अनु पश्चात् गच्छन्ति ये ते पदानुगास्तान् पदानुगान्।

व्याकरणम्—निजघान = नि + हन् + लिट्।

वाच्यान्तरम्—रामेण सर्वे राक्षसा निजघ्निरे।

कोषः—संग्रामः संगरो रण इति शब्दचन्द्रिका।

सारार्थः—शूर्पणखा विरूपिता भूत्वा खरादीनां समीपे विलपन्ती गत्वा, स्वविरूपकरणकारणं श्रावयित्वा बहु धिक् कृतवती, तन्निशम्य युद्धायोद्यतान् चतुर्दशसहस्रसंख्यकान् रजनीचरान् रामः एकाकी एव निमिषार्द्धेन हतवान्। तेषां वधं दृष्ट्वैव रावणान्तिकं दुखनिवेदनार्थं गता।

भाषाऽर्थः—शूर्पणखा, विरूप हो जाने के बाद, अपने भाई खर दूषण आदि राक्षसों से, अपनी दुःख की बातें कहने गयी, तब उसके दुःख देख, सुन कर, लड़ाई के लिये तैयार हुए चौदह हजार राक्षसों को रण में राम एकेला ही मार दिये ॥४७॥

**वने तस्मिन् निवसता जनस्थाननिवासिनाम् ॥४८॥**
**रक्षसां निहतान्यासन्सहस्राणि चतुर्दश।**

अन्वयः—तस्मिन् वने निवसता ( रामेण ) जनस्थाननिवासिनां रक्षसां चतुर्दश सहस्राणि निहतानि आसन्।

व्याख्या—तस्मिन् = दण्डके, वने = अरण्ये, निवसता = तिष्ठता रामेण = रघुनाथेन, एकाकिनैव, जनस्थाननिवासिनाम् = जनस्थानसंज्ञप्रदेशवर्त्तिनाम्, रक्षसाम् = नैऋतानां, चतुर्दशसहस्राणि निहतानि = नाशितानि, आसन्।

समासः—जनानां रजनीचराणां स्थानमिति जनस्थानं, जनस्थाने निवसन्तीति जनस्थाननिवासिनस्तेषां जनस्थाननिवासिनाम्।

व्याकरणम्—निहतानि = नि + हन् + क्तः। आसन् = अस् + लङ्।

वाच्यान्तरम्—निहतैः रक्षसां चतुर्दशसहस्रैः आसे।

सारार्थः—पञ्चवटीसमीपे एकाकिना रामेण चतुर्दशसहस्रसंख्यका राक्षसा निमिषार्धेन निहता इति।

भाषाऽर्थः—उस वन में रहते हुए रामजी ने जनस्थान में ठहरने वाले चौदह हजार खर दूषण त्रिशिरा आदि राक्षसों को मारे ॥४८॥

**ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥४९॥**
**सहायं वरयामास मारीचं नाम राक्षसम् ।**

अन्वयः—ततः = (शूर्पणखामुखात्), ज्ञातिवधं श्रुत्वा क्रोधमूर्च्छितः रावणः, मारीचं नाम राक्षसं सहायं वरयामास ।

व्याख्या—ततः = शूर्पणखावाक्यादेव, ज्ञातिवधं = निजबन्धुनाशं, (खरदूषणत्रिशिरसो रावणस्य वैमात्रेया आसन् )। श्रुत्वा = निशम्य, क्रोधमूर्च्छितः = क्रोधघूर्णितः = अमर्षहतचेतनः, रावणः = तन्नामकः, रावयतीति रावणः, विश्रवसः पुत्रः, लङ्काऽधिराजः, शूर्पणखादुःख-प्रतीकाराय, खरादिनाशामर्षदूरीकरणाय च, मारीचम् = तन्नामकम् नाम, राक्षसं = रजनीचरम्, सहायम = सीताहरणे कर्त्तव्ये सहायम् वरयामास = ययाचे ।

समासः—ज्ञातीनां वधो ज्ञातिवधस्तं ज्ञातिवधम्, मूर्च्छा जाताऽस्येति मूर्च्छितः, क्रोधेन मूर्च्छितः क्रोधमूर्च्छितः ।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा। वरयामास = वर + णिच् + लिट् ।

वाच्यान्तरम्—क्रोधमूर्च्छितेन रावणेन मारीचः सहायो वरयामासे।

कोषः—सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समा इत्यमरः ।

आलम्भ-पिञ्ज-विशर-घातो न्माथ-वधा अपि ।
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्यय इत्यमरः ।
कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियावित्यमरः ।
अनुप्लवः सहायश्चानुचरोऽभिसरः समा इत्यमरः ।

सारार्थः—शूर्पणखामुखात्तस्या दुर्दशां तथा खरदूषणादेश्च वधं ज्ञात्वा क्रोधात् किंकर्त्तव्यविमूढः सन् रामविप्रतिकाराय मारीचं साहाय्यार्थं रावणो निवेदयत्। यतो मारीचो रामेण विश्वामित्राश्रमाद् दूरमपवाहितस्तेनासौ रामविरोधी भविष्यन् तस्य हानिं करिष्यत्येवेति बुद्ध्या मारीचमेवाकथयत् ।

भाषाऽर्थः—शूर्पणखा के मुख से उसकी दुर्दशा, और अपने भाइयों का नाश जान कर रावण क्रोध से व्याकुल हो अपनी सहायता के लिये मारीच से कहने गया ॥४९॥

**वार्यमाणः सुबहुशो मारीचेन स रावणः ॥५०॥**
**न विरोधो बलवता क्षमो रावण ! तेन ते ।**

**अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥५१॥**
**जगाम सहमारीचस्तस्याश्रमपदं तदा ।**

अन्वयः—हे रावण! बलवता, तेन, ते, विरोधः, न, क्षमः, (एवं) बहुशः मारीचेन वार्यमाणः (अपि) स रावणः तद्वाक्यं, तु अनादृत्य, तदा कालचोदितः, सहमारीचः स रावणः तस्य, आश्रमपदं जगाम।

व्याख्या—हे रावण ! = लङ्काधिपते !, बलवता = अलौकिकवीर्यशालिना, तेन = रामनामकेन, ते = तव = मितवीर्यस्य, विरोधः = कलहः, न = कथमपि नहि, क्षमः = युक्तः। यतोऽहं तद्बाणप्रेरित एव विश्वामित्राश्रमात् सागरापरपारं प्राप्तः, अतस्तदलौकिकं श्लाघ्यं विक्रमं स्मृत्वा तस्य च्छायामप्यतिक्रामितुमिच्छा नोदेति, अतोनैव भवता कालविषधरस्य शिरसि पादारोपणवत् दुःसाहसः कर्त्तव्यइत्येवं बहुशः = अनेकशः तत्कथोपकथनैः, वार्यमाणः = निवारितोऽपि सः = प्रसिद्धो रावणः, तद्वाक्यं = मारीचवचनं, अनादृत्य, तदा कालचोदितः = आसन्नभाविमरणेन प्रेरितः, सहमारीचः = मारीचेन सह वर्त्तमानः, तस्य = रामस्य, आश्रमपदम् = पञ्चवटीस्थानान्तिकम्, जगाम = गतवान्।

समासः—कालेन भाविनिकटमृत्युना चोदितः प्रेरित इति कालचोदितः (चुत् प्रेरणे) मारीचेन सह वर्त्तते इति सहमारीचः, सहयोगे तृतीयेति। आश्रमश्च पदमाश्रमपदम्।

व्याकरणम्—वार्यमाणः = वारि + यक् + शानच्। अनादृत्य = आ + दृ + ल्यप्। ततो नञा समासः। जगाम = गम् + लिट्।

वाच्यान्तरम्—सहमारीचेन रावणेन आश्रमपदं जग्मे।

कोषः—विरोधो वैरभावः स्यात्कलहाङ्कुर इत्यपि इति शब्दबोधः।
युक्ते क्षमं शक्ते हिते त्रिषु इत्यमर।
कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तक इत्यमरः।
साकं सत्रा समं सह इत्यमरः।

सारार्थः—अहो रावण! यदुक्तं भवता तत्तद्वीर्यप्रभावाज्ञानेन, प्रभो! जानामि तद्बलं, एकबाणेनैवाहं विश्वामित्रस्य मुनेराश्रमादिह सागरपारे पतितः, एतदेव बहु मन्ये यत्प्राणा न गताः, अतो मम वाक्यं सत्यमेव मत्वा निवर्त्तस्व, अन्यथा मम प्राणो यास्यत्येव भवतोऽपि

तिलाञ्जलिदायकः कुले कोऽपि न स्थास्यतीति बहुशः निवारितोऽपि रावणः प्रकृत्या हठी तदुपदेशं मुमूर्षुरौषधमिव अनादृत्य, स्वसाहाय्यार्थं मारीचं सङ्गे कृत्वा रामाश्रमसमीपं गतवान् ।

भाषाऽर्थः—हे रावण ! महाराज ! उसके साथ विग्रह करना ठीक नहीं है, ऐसे मारीच से रोके गये भी रावण, मारीच के चेतावनी को न सुन, दुराग्रह वश काल वश हो उनको साथ लेकर, रामजी के आश्रम पास गया ॥ ५० ॥ ५१ ॥

**तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥**
**जहार भार्यां रामस्य, गृध्रं हत्वा जटायुषम् ।**

अन्वयः—मायाविना तेन नृपात्मजौ दूरं, अपवाह्य, रामस्य भार्यां जहार, ( ततः सीतां हृत्वा पलायमानं आत्मानं निरोधयन्तं ) जटायुषं गृध्रं हत्वा (लङ्कां प्रापयामास इति शेषः) ।

व्याख्या—मायाविना = नानाविधकपटपटुना, तेन = मारीचेन, काञ्चनमयमृगवेषधारिणा इत्यर्थः । नृपात्मजौ = राजकुमारौ, = रामलक्ष्मणौ, दूरं = दीर्घमध्वानम्, स्वमृगयाऽभिलाषया अपवाह्य = अपसार्य, स्थितम् । तावत् तापसभिक्षुकवेषं धृत्वा रावणः, असहायिनीं, रामस्य = प्रसिद्धस्य, भार्याम् = भर्तुर्योग्याम् = सीतां, विलपन्तीमपि जहार = हृतवान्, चोरवदिति भावः । तदनन्तरं, सीताविमोचनाय उपस्थितं, जटायुषम् = तन्नामकं गृध्रं = मांसाशिमहापक्षिजातिविशेषम् = सम्पातिभ्रातरम्, हत्वा = मरणपर्यवसायिनीं हिंसां विधाय लङ्काभिमुखं प्रस्थित इति ।

समासः—मायाऽस्यास्तीति मायावी, तेन मायाविना, नृपस्यात्मजौ नृपात्मजौ ।

व्याकरणम्—अपवाह्य = अप + वाहि + ल्यप् । जहार = हृ + लिट् । हत्वा = हन् क्त्वा ।

वाच्यान्तरम्—रावणेन रामस्य भार्या जह्रे ।

कोषः—मायावी कपटी धूर्त्तो विलाडव्रतिकस्तथेति शब्दरत्नाकरः ।
दाक्षाय्यगृध्रावित्यमरः ।

सारार्थः—पूर्वं यावत् कपटकाञ्चनरूपमयं मां दृष्ट्वा नियतं मृगयाऽर्थी रामो ममानुगमनं करिष्यत्येव, ततो रामस्वरेणाहं 'हा लक्ष्मण !

हतोऽहमनेन' एवं माक्रुश्यमाणे मयि नियतं सीतां विहाय स्वयं, वा सीतया सशङ्कया प्रेरितो लक्ष्मणः राममनुधावन् यदा दूरं यास्यति, तदा ऽसहायिनीं सीतां भवान् हरिष्यति । एवं विचार्य, रामलक्ष्मणौ मारीचेन दूरं निःसारितौ । तावत् रावणेन विलपन्ती सीताऽपहृता । तामादाय गतवतो रावणस्याभिमुखं जटायुरागत्य मार्गावरोधविरोधञ्च कृतवान्, तथाविधं विघ्नदं मृतप्रायं विधाय पुनः सीतामादाय लङ्काभिमुखं रावणो गतवान् ।

भाषाऽर्थः—मारीच के द्वारा राम और लक्ष्मण को दूर हटा कर, पीछे सीता जी को रावण हरण किया, और सीता को छीन ने वाले जटायु गीध को निश्चेष्ट करदिया ॥ ५२ ॥

**गृध्रं च निहतं दृष्ट्वा, हृतां श्रुत्वा च मैथिलीम् ॥ ५३ ॥**
**राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ।**

अन्वयः—राघवः, गृध्रं च निहतं दृष्ट्वा, मैथिलीं हृतां च श्रुत्वा, शोकसन्तप्तः आकुलेन्द्रियः सन् विललाप ।

व्याख्या—मारीचं हत्वा प्रतिनिवर्त्तमानो रामः, पञ्चवट्यां सीतां न दृष्ट्वा, शङ्कितचित्तः, इतस्ततो यावत् अन्वेषणं अकरोत्, तावत् गृध्रं = जटायुनामानं, निहतं = दूरतो—मृतमिव निश्चेष्टम्, समीपगमनेन आसन्नमरणं, दृष्ट्वा = अवलोक्य, तन्मुखादेव रावणेन हृतां = चोरितां, मैथिलीं = सीतां च, श्रुत्वा = निशम्य, शोकसन्तप्तः = दुःखदग्धः, अतएव आकुलेन्द्रियः = व्यथितसर्वावयवः, राघवः = रामः, रघुवंशीयः, विललाप = परिदेवनमकरोत् । हा सीते ! मां विहाय क्व गताऽसि, किं कथयिष्यामि मातरं, श्वशुरं वा. अहो मया महान् प्रमादो विहितः । एवं करुणाक्रन्दनमकरोत् ।

समासः—शोकेन सन्तप्तः शोकसन्तप्तः । आकुलानि इन्द्रियाणि यस्य स आकुलेन्द्रियः ।

व्याकरणम्—निहतं = नि + हन् + क्तः । दृष्ट्वा = दृश् + क्त्वा । हृतां = हृ + क्तः + टाप् + अम् । श्रुत्वा = श्रु + क्त्वा । विललाप = वि + लप् + लिट् ।

वाच्यान्तरम्—राघवेण विलेपे ।

कोषः—आतायिचिल्लौ दाक्षाय्यगृध्रौ—इत्यमरः ।

सारार्थः—मृगयानिवृत्तो रामः पञ्चवट्यां सीतामदृष्ट्वा संशयमापन्न-

इतस्ततो यावदन्वेषणं करोति तावत् गतप्राणसदृशं गृध्रमेकं तथा भग्नं रथं चावलोक्य महान् हेतुरत्र भविष्यतीति धिया तत्समीपं गत्वा तन्मुखान्निखिलं वृत्तं सीताहरणात्मकं विदित्वा स्त्रीविरहदुःखदग्धः सन् समधिकं विललापेति ।

भाषार्थः—शिकार से लौटने पर, पञ्चवटीमें सीता को न देख, इधर उधर सीता को ढूंढ़ते हुए जब रामजी आगे बढ़े, तो हुक् हुक् करते एक गीध को देख, उनसे सीता हरण हो जाने की हाल सुनकर अत्यन्त दुःखी, और सब अङ्ग झूठा सा हो गया ॥ ५३ ॥

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥५४॥
मार्गमाणो वने सीतां राक्षसं स ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥५५॥

अन्वयः—ततः, तेनैव शोकेन जटायुषं गृध्रं दग्ध्वा, वने सीतां मार्गमाणः स रामः रूपेण, विकृतं, घोरदर्शनम्, कबन्धं नाम राक्षसं ददर्श ह ।

व्याख्या—ततः = जटायुमुखात्सीताहरणवृत्तान्ते विदिते, तेनैव = सीताहरणजनितेनैव, शोकेन = दुःखाग्निना जटायुषम् = तन्नामकम् = गृध्रम्, दग्ध्वा = प्रज्वाल्य, तस्यौर्ध्वदैहिकीं क्रियां कृत्वा पक्षिभ्यो-मांसादिभक्ष्यभोज्यं दत्वा, ततोवने = दण्डकारण्ये, सीतां = जानकीं मार्गमाणः = अन्विष्यन्, स = रामः, रूपेण आकारेण = विकृतम् = विचित्रं, घोरदर्शनम् = भयङ्कराकारं, राक्षसं कबन्धं = तन्नामकं, नाम ददर्श = अवलोकयामास । इन्द्रवज्रप्रहारेण तच्छिरोग्रीवा तदुदरमध्ये-ऽन्तर्भूता अतोग्रीवाहीनस्य कबन्ध इति युक्तं नाम ।

समासः—घोरं दर्शनं यस्य सः घोरदर्शनः ।

व्याकरणम्—दग्ध्वा = दह + क्त्वा । ददर्श = दृश् + लिट् ।

वाच्यान्तरम्—तेन राक्षसो दृदृशे ।

कोषः—राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रपआसर इत्यमरः ।
शिरोहीनः शिरोऽधोऽङ्गः कबन्धः कथ्यते बुधैरिति ।

सारार्थः—ततः सीताहरणवार्त्ताकथनोत्तरं मृतस्य जटायोः शरीरं दग्ध्वा, तस्य सद्गतिलाभाय तज्जातिपक्षिभ्यो मृगमांसादिकं समर्प्य, तस्मान्निवृत्तः सीतामन्वेषयन् अग्रे भयङ्करं कबन्धं ददर्श ।

भाषाऽर्थः—उसके बाद मरे हुए जटायु को जलाकर सीता को वन में ढूंढ़ते हुए जैसे आगे बढ़े कि तैसे एक भयंकर कबन्ध राक्षस को देखे ॥ ५४ ॥ ५५ ॥

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।
स चास्य कथयामास शबरीं धर्मचारिणीम् ॥५६॥
श्रमणीं धर्मनिपुणामभिगच्छेति राघव ! ।

अन्वयः—महाबाहुः तं निहत्य ददाह, सः च स्वर्गतः । स च अस्य धर्मचारिणीं शबरीं कथयामास, (किमित्याह) हे राघव ! धर्मनिपुणां श्रमणीं, अभिगच्छ इति कथयामास ।

व्याख्या—महाबाहुः = आजानुलम्बितभुजः, रामः, कबन्धभुजान्तर्गतं व्यक्तित्रयमवलोक्य, तं = कबन्धं राक्षसं निहत्य = संहृत्य, ततः संजातदिव्यरूपस्य तस्य प्रार्थनया तस्य पूर्वदेहं, ददाह = दग्धवान् । स = दिव्यगन्धर्ववेषधारी च, स्वः = स्वर्गं, गतः = प्राप्तः । परन्तु चलनसमये स च, धर्मचारिणीं = श्रुतिस्मृत्युक्तधर्मनिरताम्, शबरीं = नीचजातिम् = स्वैकान्तभक्तिमतीं ज्ञात्वा इति योज्यम्, श्रमणां = परिव्राजिकाम्, धर्मनिपुणां = परमधर्मज्ञाम्, तां, अभिगच्छ = याहि, इति कथयामास ।

समासः—महान्तौ बाहू यस्य सः महाबाहुः । धर्मान् चारयति प्रचारयति इति धर्मचारिणी, तां धर्मचारिणीम् । धर्मेषु निपुणा, धर्मनिपुणा, ताम् धर्मनिपुणाम् ।

व्याकरणम्—निहत्य = नि + हन् + ल्यप् । ददाह = दह + लिट् । कथयामास = कथ + णिच् + लिट् । अभिगच्छ = अभि + गम् + लोट् ।

वाच्यान्तरम्—महाबाहुना तेन देहे । तेन स्वर्जग्मे । राघवेण शबरी कथयाञ्चक्रे ।

कोषः—स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया इत्यमरः ।
नृपाणां वैश्यतो जातः शबरः परिकीर्त्तितः ।
मधूनि वृक्षान्यादाय विक्रीणीते स्ववृत्तये । इति नारदीयम् ।

सारार्थः—महापराक्रमी रामः, कबन्धं हत्वा, पश्चाद्गन्धर्वरूपधारिणस्तस्य प्रार्थनया, तस्य पौर्वं शरीरं ददाह । अथ स गन्धर्वः रामाय

शबरीपरिचयं' इत्वा, तस्यै दर्शनं देहीति सानुनयमुक्त्वा स्वयं सत्वर-मेव स्वर्गं प्रस्थितः ।

भाषाऽर्थः—आजानुबाहु रामचन्द्र उस कबन्धको मारकर जलाय दिये, बाद, कवन्ध, दिव्य गन्धर्व वेष धारण करके स्वर्ग को जाता हुआ, और राम से 'शबरी के यहां कृपाकर जाइये, यह अनुरोध किया ॥५६॥

**सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ५७ ॥**
**शबर्या पूजितः सम्यग्रामो दशरथात्मजः ।**
**पम्पातीरे हनुमता संगतो वानरेण ह ॥ ५८ ॥**

अन्वयः—महातेजाः शत्रुसूदनः स शबरीं अभ्यगच्छत् । दशरथात्मजः ( रामः ) शबर्या सम्यक् पूजितः । पम्पातीरे वानरेण हनुमता (च) संगतः ह ।

व्याख्या—महातेजाः = अतितेजस्वी, शत्रुसूदनः = रिपुसंहरणः, स = रामः, शबरीं = एतन्नामिकां, स्वभक्तिमतीं, अभ्यगच्छत् । ततः, दशरथात्मजः = दशरथपुत्रः, रामः, शबर्या = एतन्नामिकया, सम्यक् उत्तमरुपेण, भोजनाद्युपचारेणेति शेषः । पूजितः = पूजा जाता अस्य इति पूजितः । एतावत्पर्यन्तमारण्यकाण्डकथाबीजम् । अतः परं किष्किन्धाकाण्डकथाऽस्ति । ततः = तदनन्तरम् , पम्पातीरे = पम्पासरस्तीरे; वानरेण = कपिना, हनूमता = एतन्नाम्ना, संगतः = संमिलितः, ह इति हर्षे ।

समासः—महत् तेजो यस्य असौ महातेजाः । शत्रून् सूदयति इति शत्रुसूदनः । दशरथस्यात्मजः दशरथात्मजः । पम्पायास्तीरं पम्पातीरम् तस्मिन् पम्पातीरे ।

व्याकरणम्—अभ्यगच्छत्=अभि+गम् + लङ् । पूजितः=पूज+क्तः ।

वाच्यान्तरम्—महातेजसा तेन शबरी अभ्यगम्यत ।

कोषः—हरिः कपिर्वानरो वा शाखामृग इति कोषः ।

सारार्थः—कबन्धकथया शबर्याः सादरं गृहीतसत्कारः, रामः पम्पातीरे हनुमता च संगतः ।

भाषाऽर्थः—अत्यन्त तेजस्वी, शत्रुसंहार करने वाला राम, शबरी के यहां गये, और उस से सत्कार पाकर जैसे ही आगे बढे, कि पम्पा-नदी के किनार में हनूमान् जी मिले ॥ ५७ ॥ ५८ ॥

हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ॥५९॥
आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ।

अन्वयः—हनुमद्वचनात् च एव सुग्रीवेण समागतः। (तत्र) महाबलः रामः, आदितः तत् सर्वं (स्वकीयं) विशेषतः सीतायाश्च तत् (हरणरूपं) यथावृत्तं सुग्रीवाय शंसत्।

व्याख्या—हनुमद्वचनात् = हनुमतः साग्रहानुनयनिवेदनात, च, एव = निश्चयेन, सुग्रीवेण = एतन्नाम्ना बालिसहजेन, समागतः = संमिलितः। ततोऽग्निसाक्षिके सिद्धे सौहार्दे, महाबलो रामः, आदितः = स्वजन्मतः प्रभृति, तत् = स्वकीयं = वनवासगमनादिकं, सर्वं = निःशेषं, वृत्तान्तम्, तथा च, विशेषतः = प्रधानरूपेण, सीतायाः = जानक्याः, च = अपि, विस्तरतः, तत् = हरणादिकं, यथावृत्तं = यथावद्वृत्तं, शंसत् = अशंसत् = अकथयत्।

समासः—हनुः (इन्द्रवज्रप्रहारेण विकृतो) यस्य स हनुमान्, तस्य यद्वचनं, तस्मात् हनुमद्वचनात्। सुन्दरी ग्रीवा यस्य सः सुग्रीवः। महत् बलं यस्यासौ महाबलः।

व्याकरणम्—समागतः = सम् + आङ् + गम् + कर्तरि + क्तः। शंसत् = शंस् + लङ्। आर्षत्वादडभावः।

वाच्यान्तरम्—महाबलेन रामेण सर्वं वृत्तम् अशस्यत।

कोषः—वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्तथाऽव्यय इत्यमरः।

सारार्थः—हनुमतः परिचयेन, सुग्रीवेण रामस्य परिचयो जातः, ततो बाल्यात्प्रभृति वनवासागमनावधि स्वस्य, तथा सीतायाश्च हरणादिकं सर्वं वृत्तं सुग्रीवाय अकथयत्।

भाषार्थः—हनुमान जी के वचन से, सुग्रीव से जान पहचान होने पर राम जी, सुग्रीव को अपनी सब हाल, और सीता का हरण आदि सब हालत बताये ॥५९॥

सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥६०॥
*चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम्।

* अत्र बहवो जना एवं शङ्कां कुर्वते, यत् यथैवानुजवधूगामी बालिः पातकी, तथैव ज्येष्ठजायाविहारी सुग्रीवोऽपि पातकी आसीत् ( यदा दुन्दुभिदैत्यहननाय

अन्वयः—वानरः सुग्रीवः, च, अपि, रामस्य तत् सर्वं श्रुत्वा, प्रीतश्च, रामेण (सह) एव अग्निसाक्षिकं सख्यं चकार ।

व्याख्या—वानरः = कपिः, सुग्रीवः = एतन्नामकः, च अपि = निश्चयेन, रामस्य, तत् = स्ववृत्तं, सीतापहरणवृत्तं च, सर्वं = निखिलम्, श्रुत्वा = निशम्य, प्रीतः = प्रसन्नः, च, निर्व्याजसकलरहस्यनिवेदनेन प्रीतेरुत्पत्तिः सहजैवेति। रामेण, (सह) अग्निसाक्षिकम् = अग्निमध्यस्थताकं, सख्यम् = मित्रत्वम्, चकार = कृतवान् । अत्र यथाऽहं स्त्रीविरहितस्तथैवायमपीति तुल्यदुःखपीड़ितत्वात् मिथो मैत्री जाता ।

समासः—अग्निः साक्षी यस्मिन् तत् कर्म अग्निसाक्षिकम् ।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा । चकार = कृ + लिट् ।

वाच्यान्तरम्—रामेण सह सुग्रीवेण सख्यं चक्रे ।

कोषः—मर्कटो वानरः कीश इत्यमरः ।

साक्षी द्रष्टा समक्षस्थ इति कोषः ।

सारार्थः—रामस्य सर्वमशेषतो वृत्तान्तं श्रुत्वा, सुग्रीवः अग्निं साक्षीकृत्य रामेण मैत्रीं संयोजितवान् ।

भाषाऽर्थः—सुग्रीव ने, रामजी के आदि से अन्त तक सब समाचार सुन, प्रसन्न हो कर, अग्नि को साक्षी ( गवाही ) रख, रामजी से मैत्री की ॥६०॥

**ततो वानरराजेन वैरानुकथनं प्रति ॥६१॥**
**रामायावेदितं सर्वं प्रणयाद् दुःखितेन च ।**

1954. Paper II page 27 2.(...)

अन्वयः—ततः, सुग्रीवेण, वानरराजेन ( सह ) वैरानुकथनं प्रति, प्रणयात्, दुःखितेन च, सर्वं, रामाय आवेदितम् ।

व्याख्या—ततः = मिथो मित्रत्वयोजनानन्तरं, सुग्रीवेण, वानरराजेन = बालिना, सह, वैरानुकथनं = शत्रुत्वहेतुप्रश्नं प्रति, कथं ज्येष्ठेन

सुग्रीवेण सह बालिर्गतवान्, तदा तत्समयातिक्रमं विज्ञाय, रुधिरधारावलोकनभीतः सुग्रीवस्तत आगत्य तारां बालिपत्नीं स्वशय्यायामारोपितवान् ।) तदा कथं सुग्रीवेण मैत्री, बालिना वैरमित्युच्यते तदुत्तरम् । रामस्य दयिताविरहदुःखं दयिताविरही सुग्रीव एव ज्ञास्यति, न तु तथा बली सस्त्रीको बालिः, तथा च सुग्रीवः सूर्यपुत्रत्वेन सगोत्र आसीत् । अथवा तदानीं 'देवराच्च सुतोत्पत्तिः, इति व्यवहार- आसीदत आततायी बालिरेव रामेण हत इति ।

बलवता बालिना तव विरोधो वृद्ध इति पृच्छानन्तरमित्यर्थः। प्रणयात् = स्नेहात्, वा विश्वासात्, दुःखितेन = खिन्नचित्तेन च, सर्वं = सकलं, स्पष्टतया, रामाय, आवेदितम् = निवेदितम्। वा वानरराजेन = सुग्रीवणेति व्याख्येयम्।

समासः—वानराणां राजा वानरराजस्तेन वानरराजेन, वैरस्य अनुकथनं प्रश्न इति वैरानुकथनम्।

वाच्यान्तरम्—वानरराजः सर्वम् आवेदितवान्।

कोषः—प्रणयास्त्वमी। विस्रम्भयाञ्चाप्रेमाण इत्यमरः।

सारार्थः—ततो जाते सख्ये, कथं तव बालिना विरोधो जात इति रामेण पृष्टे आदितो दुन्दुभिवधादि सर्वं तस्मै सुग्रीवेण निवेदितम्।

भाषाऽर्थः—राम, सुग्रीव इन दोनों में मित्रता होने पर, कैसे बालि के साथ दुश्मनी हुई, यह रामजी के पूछने पर सुग्रीवने खुलासा सब हाल बतला दिये ॥६१॥

**प्रतिज्ञातं च रामेण तदा बालिवधं प्रति ॥ ६२ ॥**
**बालिनश्च बलं तत्र कथयामास वानरः।**
**सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६३ ॥**

अन्वयः—तदा रामेण च बालिवधं प्रति प्रतिज्ञातम्। (परन्तु) सुग्रीवश्च नित्यं राघवे वीर्येण शङ्कित आसीत्। (अतएव) तत्र वानरः बालिनः बलं च कथयामास।

व्याख्या—तदा = सुग्रीवदुःखश्रवणसमये एव, बालिवधं = स्वविरोधिनो ज्येष्ठभ्रातुर्हननं, प्रति, प्रतिज्ञातम् = संकल्पितम्। अवश्यमेवाहं तव शत्रुरूपं भ्रातरं हनिष्यामीति प्रतिज्ञा कृतेति। परन्तु, स च सुग्रीवः, (यतः) नित्यं = सदा, वीर्येण = विक्रमेण, राघवे = रामे, शङ्कितः = सन्दिग्धः, आसीत्। (अत एव) तत्र = किष्किन्धायाम्, वानरः = सुग्रीवः, बालिनः = स्वरिपोः, बलम् = वीर्यं, (अरुणोदयानन्तरं सूर्योदयात्प्रागेव रावणं गृहीत्वा चतुःसमुद्रलङ्घनादिरूपं) कथयामास।

समासः—बालिनः वधः बालिवधस्तं बालिवधम्।

व्याकरणम्—प्रतिज्ञातः = प्रति + ज्ञा + क्तः। कथयामास = कथ + णिच् + लिट्। आसीत् = अस् + लङ्।

वाच्यान्तरम्—रामः प्रतिज्ञासीत् । वानरेण बालिबलं कथयाञ्चक्रे । सुग्रीवेण शङ्कितेन अभूयत ।

कोषः—सततेनारताश्रान्तसन्तताविरतानिशम् ।

नित्यानवरताजस्रमप्यथातिशयो भर इत्यमरः ।

सारार्थः—सुग्रीवदुःखहेतुं श्रुत्वा रामेण प्रतिज्ञातं 'यदहं सत्वरमेव तव शत्रुं घातयिष्यामि' एवं प्रतिज्ञां श्रुत्वा सुग्रीवस्य हृदि सन्देह उत्पन्नो यदयं रामो बालिना समो वीर्येऽस्ति न वेति हेतो रामाय रावणतोलनरूपं बालिनो विनोदं वा वक्ष्यमाणं विक्रमं, कथयामास ।

भाषार्थः—तब सुग्रीव के दुःख को सुन कर, रामने बालि को मारने की प्रतिज्ञा की । परन्तु राम बल में बालि के समान हैं, या नहीं, इस सन्देह में पड़ कर बालि के पराक्रम, ( कैसे रावण को बगल में दवा कर चारो समुद्र लांघ आये सो ) कहे ॥ ६२ ॥ ६३ ॥

राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६४ ॥

अन्वयः—सुग्रीवः राघवप्रत्ययार्थं तु दुन्दुभेः महापर्वतसन्निभं उत्तमं कायं दर्शयामास ।

व्याख्या—राघवप्रत्ययार्थं = रामविश्वासार्थं, बालिः कीदृशो बली वर्त्तते इति बोधनायेत्यर्थः । तु = एव, दुन्दुभेः = एतन्नामकस्य राक्षसस्य, महापर्वतसन्निभम् = अतिविशालशैलसदृशम् , उत्तमम् = उन्नतं, वा = बलप्रत्यायने परमं निमित्तम्, कायं = शरीरम् = अस्थिमात्रावशेषमपि, दर्शयामास ।

समासः—राघवस्य प्रत्ययः राघवप्रत्ययस्तस्यार्थं राघवप्रत्ययार्थं, महाँश्चासौ पर्वतः महापर्वतस्तस्य सन्निभ इति महापर्वतसन्निभस्तं महापर्वतसन्निभम् ।

व्याकरणम्—दर्शयामास = दृश् + णिच् + लिट् ।

वाच्यान्तरम्—उत्तमो दुन्दुभेः कायः सुग्रीवेण दर्शयामासे ।

कोषः—प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु इत्यमरः ।

शैलोऽद्रिः पर्वतो नग इति शब्दार्णवः ।

सदृशः सन्निभः सम इति शब्दार्णवः ।

सारार्थः—बाली मद्भ्राता कीदृशो बलवान् इति रामस्य विश्वासार्थं

दुन्दुभेः अत्युन्नतमस्थिकङ्कालं तस्मै दर्शयामास, अर्थात् गलितेऽपि मांसादौ यस्येदृशमस्थिपञ्जरमस्ति, तं हत्वा एकहस्तेनोत्तोल्य मतङ्गमुनेराश्रमे अत्र बालिना उत्क्षिप्तम्। अनेनैव तद्विक्रमं जानीहि।

भाषाऽर्थः—सुग्रीव ने राम को विश्वास के लिये भारी पर्वत के ऐसे मरे हुए दुन्दुभी दानव के शरीर को दिखाये ॥ ६४ ॥

**उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।**
**पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥६५॥**

अन्वयः—महाबाहुः, महाबलः, अस्थि प्रेक्ष्य, उत्स्मयित्वा, पादाङ्गुष्ठेन सम्पूर्णं दशयोजनम्, चिक्षेप।

व्याख्या—महाबाहुः = विशालभुजः, महाबलः = अपरिमेयबलः, (रामः,) ( अग्रे दुन्दुभेः ) अस्थि = कुल्यम्, प्रेक्ष्य = विलोक्य, उत्स्मयित्वा = आः कियन्मात्रमेतत्, इति अनादरेण ईषद्धासं कृत्वा, पादाङ्गुष्ठेन = चरणाङ्गुष्ठेन, अवहेलया, सम्पूर्णं = अन्यूनम्, दशयोजनम् = चत्वारिंशत्क्रोशमितं दूरं, चिक्षेप = निःक्षिप्तवान्।

समासः—महान्तौ बाहू यस्य सः महाबाहुः। पादस्य अङ्गुष्ठं पादाङ्गुष्ठम्, तेन पादाङ्गुष्ठेन।

व्याकरणम्—उत्स्मयित्वा = उत् + स्मीङ् + क्त्वा। प्रेक्ष्य = प्र+ईक्ष् + ल्यप्। चिक्षेप = क्षिप् + लिट्।

वाच्यान्तरम्—महाबलेन रामेण सम्पूर्णो दुन्दुभिकायः चिक्षिपे।

कोषः—कीकसं कुल्यमस्थि चेत्यमरः।
पदपादाङ्घ्रिचरणा इति कोषः।

सारार्थः—महाबलो रामः सुग्रीवं शङ्कितं ज्ञात्वा पुरःस्थितं दुन्दुभेरस्थिपञ्जरं दृष्ट्वा, आः कियदेतदिति विहस्य, चरणाङ्गुष्ठेन तत् दशयोजनान्तरे चिक्षेप।

भाषाऽर्थः—बड़े बलवान् राम ने सुग्रीव के सन्देह को समझकर उस दुन्दुभि के हड्डी को देख, जोर से हंस, पांव के अंगूठे से उसको दशयोजन ( चालिस कोश ) की दूरी पर, फेक दिया ॥६५॥

**विभेद च पुनः *सालान् सप्तैकेन महेषुणा ।**
**गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥६६॥**

* तालानित्यपि पाठः।

अन्वयः—तदा प्रत्ययं जनयन्, पुनः एकेन महेषुणा सप्त सालान्, गिरिं, रसातलं च, एव विभेद ।

व्याख्या—तदा = तदानीं, सुग्रीवसन्देहदूरीकरणावसरे, पुनः = भूयः, (सुग्रीवस्य, चित्ते) प्रत्ययं = विश्वासम्, जनयन् = उत्पादयन्, एकेन = अद्वितीयेन = एकमात्रेणेत्यर्थः । महेषुणा = दिव्यशरेण, सप्त = सप्तसंख्यकान्, सालान् = सर्जवृक्षान्, क्वचित् तालान् = तृणराजान्, गिरिं = पर्वतं, रसातलं = पातालं, च = अपि, विभेद = विदीर्णवान् ।

समासः—महान् इषुर्महेषुस्तेन महेषुणा ।

व्याकरणम्—विभेद = भिद् + लिट् । जनयन् = जन् + णिच् + शतृ ।

वाच्यान्तरम्—रामेण एकेन बाणेन सप्त ताला विभिदिरे ।

कोषः—तृणराजाह्वयस्तालो नारिकेरस्तु लाङ्गलीत्यमरः ।

अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया इत्यमरः ।

प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु इत्यमरः ।

सारार्थः—सुग्रीवस्य विश्वासोत्पादनाय रघुनाथः एकेन बाणेन सप्त तालान्, पर्वतं च, भिन्दन् रसातलं च विभेद । अनेन बालिनोऽधिकबलवान् राम इति सुग्रीवस्य विश्वासो जातः ।

भाषार्थः—तब सुग्रीव के चित्त में विश्वास दिलाने के लिये रामने एक ही बाण से, सात ताड़के पेड़ों को, और पर्वत को छेदते हुए, पाताल तक छेद दिया ॥ ६६ ॥

किं.का

**ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।**
**किष्किन्धां रामसहितो जगाम च गुहां तदा ॥६७॥**

अन्वयः—ततः प्रीतमनाः, तेन विश्वस्तः, स महाकपिः, तदा रामसहितः च सन् किष्किन्धां गुहां जगाम ।

व्याख्या—ततः = रामपराक्रमदर्शनानन्तरम्, प्रीतमनाः = प्रसन्नचित्तः, तेन = कर्मणा, सप्ततालोच्छेदनादिरूपेण, विश्वस्तः = विश्वासं प्राप्तः, महाकपिः = वानरश्रेष्ठः, स = सुग्रीवः, रामसहितः भूत्वा, तदा = तत्क्षणे, किष्किन्धां = एतन्नामिकाम्, गुहाम् = गह्वरम् बालिराजधानीं, प्रति जगाम = ययौ ।

समासः—प्रीतं मनो यस्य असौ प्रीतमनाः, महांश्चासौ कपिर्महाकपिः । रामेण सहितो रामसहितः ।

व्याकरणम्—विश्वस्तः = विश्वस् + कर्तरि + क्तः । जगाम = गम् + लिट् ।

वाच्यान्तरम्—विश्वस्तेन तेन सुग्रीवेण किष्किन्धा जग्मे ।

कोषः—कपि-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखाः ।
मर्कटो वानरः कीशो वनौका इत्यमरः ।
गह्वरं गुहेति कोषान्तरम् ।

सारार्थः—सुग्रीवस्तु रामस्य पराक्रमं विलोक्य, अवश्यमयं बालि-हननयोग्य इति जातविश्वासेन परमप्रसन्नः परहस्तगतं सस्त्रीकं राज्यं पुनर्हस्तगतमिव मन्यमानः, बालिविजयाय रामेण सह किष्किन्धां स्वराजधानीं जगामेति ।

भाषाऽर्थः—राम जी के पराक्रम को देख, परम प्रसन्न सुग्रीव झट उन को साथ लेकर, किष्किन्धा में बालि के ऊपर चढ़ाई करने को चले ॥ ६७ ॥

**ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।**
**तेन नादेन महता निर्जगाम हरीश्वरः ॥६८॥**

अन्वयः—ततः, हेमपिङ्गलः, हरिवरः, सुग्रीवः, अगर्जत् । तेन महता नादेन, हरीश्वरः (च) निर्जगाम ।

व्याख्या—ततः = किष्किन्धागमनानन्तरं, हेमपिङ्गलः = सुवर्ण-वर्णः, हरिवरः = वानरश्रेष्ठः, सुग्रीवः = एतन्नामकः, अगर्जत् = (यथा बालिः शृणोतु, तथा शब्दं चकार)। अथ तेन = क्रोधसूचकेन वाऽऽक्र-मणसूचकेन, महता = पूर्वापेक्षयाऽधिकेन, नादेन = शब्देन, हरीश्वरः = वानराधिपतिः = बाली, च = अपि, स्वराजधानीतः, निर्जगाम = शत्रु-नाशाय वहिर्गतः ।

समासः—हरीणां वरः इति हरिवरः । हेम इव पिंगलः हेमपिंगलः । हरीणामीश्वरः हरीश्वरः ।

व्याकरणम्—अगर्जत् = गर्ज + लङ् । निर्जगाम = निर् + गम् + लिट् ।

वाच्यान्तरम्—हरिवरेण अगर्ज्यत । हरीश्वरेण निर्जग्मे ।

कोषः—हरिरिन्द्रे हरिर्विष्णौ हरिः शाखामृगे तथेतिकोषः ।
स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकमित्यमरः ।
पिशङ्गः कद्रुपिङ्गलावित्यमरः ।

सारार्थः—रामसहायः सुग्रीवः किष्किन्धां प्राप्य, युद्धाय बालिनमाह्वयत् । बाली च तस्य शब्दमनुमान्य तज्जयाय बहिः प्रस्थित इति ।

भाषाऽर्थः—तब किष्किन्धा के समीप जाकर सुग्रीव गरज उठे बाद उस गर्जन को सुन बाली बाहर निकला ॥ ६८ ॥

अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैनं शरेणैकेन राघवः ॥६९॥

अन्वयः—तदा, तारां, अनुमान्य, सुग्रीवेण समागतः । तत्र च राघवः एकेन शरेण, एनं निजघान ।

व्याख्या—तदा = निर्गमनान्तरं, वा (सुग्रीवस्य रामेण मैत्री जातेति श्रूयते, अतोऽसौ तत्सहायो जेतुमशक्यः, अतस्तत्र न त्वया गन्तव्यः इति गन्तुकाममात्मानं निवारयन्तीं तारां = एतन्नामिकां स्वपत्नीम्, (बालिः), अनुमान्य = सन्तोष्य, (धर्मात्मा पक्षपातरहितो रामोऽनपराधिनं मां न हनिष्यतीत्यादिवाक्यैस्तच्चिन्तां दूरीकृत्य, पश्चात्) सुग्रीवेण = स्वलघुसोदरेण, सह, युद्धार्थं, समागतः = उपस्थितः। तत्र = किष्किन्धायाम् च जाते तयोः समरे, राघवः = रामः, एनं = बालिनं, आततायिनं विज्ञाय, एकेन, शरेण = बाणेन, निजघान = हतवान् ।

व्याकरणम्—अनुमान्य = अनु + मन् + णिच् + ल्यप् । निजघान = नि + हन + लिट् ।

वाच्यान्तरम्—राघवेण एकेन शरेण बाली निजघ्ने ।

कोषः—हरिश्चन्द्रप्रिया तारा, तारा बालिप्रियोडु चेति ।
बाणः शर इषुरितिकोषः ।

सारार्थः—अङ्गदमुखेन रामसुग्रीवयोर्मैत्रीं श्रुत्वा, तथा च रामस्य सप्ततालवेधनादि अनिर्वचनीयं पराक्रमं च ज्ञात्वा, स्वामिजयाशाहीना तारा स्वसौभाग्यरक्षणेच्छया, पतिं बहिर्गन्तुमिच्छन्तं रुरोध । परन्तु वीरवरो बाली रामस्य निष्पक्षपाततां प्रदर्श्य, बहुविधैर्वाक्यैः सन्तोष्य सुग्रीवेण सह युद्धार्थमागतो युयुधे, तत्र सुग्रीवं क्षीणवीर्यमालक्ष्य एकेनैव शरेण रामो बालिनं हतवान् ।

भाषाऽर्थः—रोकती हुई तारा को समझा कर बाली, सुग्रीव से लड़ा, उस युद्ध में राम ने एक ही शर से बाली को मार दिया ॥६९॥

**ततः सुग्रीववचनाद्धत्वा बालिनमाहवे ।**
**सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥७०॥**

अन्वयः—ततः राघवः, सुग्रीववचनात् आहवे बालिनं हत्वा, तद्राज्ये सुग्रीवमेव प्रत्यपादयत् ।

व्याख्या—ततः = युद्ध नन्तरम्, राघवः = रघुवंशीयः = रामः, सुग्रीववचनात् = सुग्रीवकरुणवाक्यात्, आहवे = युद्धे, बालिनं = सुग्रीवप्रतिपक्षिणं, हत्वा = मारयित्वा, तद्राज्ये = बालिराज्ये = कपिराज्ये वा, सुग्रीवमेव, प्रत्यपादयत् = स्थापयामास ।

समासः—सुग्रीवस्य वचनं सुग्रीववचनं, तस्मात्सुग्रीववचनात् ।

व्याकरणम्—हत्वा = हन् + क्त्वा । प्रत्यपादयत् = प्रति + पद् + णिच् + लङ् ।

वाच्यान्तरम्—राघवेण सुग्रोवो राज्ये प्रत्यपाद्यत ।

कोषः—भाषितं वचनं वच इत्यमरः ।

आहवः समरो रण इति कोषः ।

सारार्थः—उपस्थिते बालिसुग्रीवयोः संग्रामे, सुग्रीवस्य पराभवसूचकं वाक्यं श्रुत्वा दुर्बलपक्षपोषकेण रामेण, एकेन शरेण बालिनं हत्वा कपिराज्यं सुग्रीवाय समर्पितम् ।

भाषार्थः—बाद सुग्रीव के कहने से, रामजी लड़ाई में बाली को मार कर, उस राजगद्दी पर सुग्रीव को बैठाये ॥७०॥

**स च सर्वान् समानीय वानरान् वानरर्षभः ।**
**दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥७१॥**

अन्वयः—वानरर्षभः स च, सर्वान् वानरान् समानीय, जनकात्मजाम्, दिदृक्षुः, दिशः प्रस्थापयामास ।

व्याख्या—वानरर्षभः = कपिप्रधानः, सः = सुग्रीवः च = अपि, सर्वान् = राज्यवर्त्तिनो-वानरान् = कपीन्, समानीय = आहूय, जनकात्मजाम् = जानकीं, हृतामिति शेषः, दिदृक्षुः = द्रष्टुमिच्छुः, अन्वेषिषुः, क्वास्ति सा, इति ज्ञातुकामः, दिशः = चतस्रः आशाः, प्रति प्रस्थापयामास = प्रेषितवानिति, सीतां दृष्ट्वाऽऽगच्छत, इति आदिष्टवान् ।

समासः—वानरेषु ऋषभः श्रेष्ठः इति वानरर्षभः । जनकस्यात्मजा जनकात्मजा तां जनकात्मजाम् ।

व्याकरणम्—समानीय=सम्+आङ्+नी+ल्यप्। प्रस्थापयामास=प्र+स्था+णिच्+लिट्। दिदृक्षुः=दृश्+सन्+उः।

वाच्यान्तरम्—तेन सुग्रीवेण सर्वे वानराः प्रस्थापयामासिरे।

कोषः—दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः।

सारार्थः—वानराधिपतिपदे स्थितः सुग्रीवो निखिलान्वानरान् समाहूय सीतान्वेषणाय सर्वा दिशः, प्रेषितवान् इति।

भाषार्थः—वानरों का राजा सुग्रीव, सब बानरों को बुलाकर सब दिशाओं में सीताको ढूंढ़ने के लिये भेजे ॥७१॥

इति किष्किन्धाकाण्डकथा।

---

## अथ सुन्दरकाण्डकथाऽऽरभ्यते ।

ततो गृध्रस्य वचनात्सम्पातेर्हनुमान् बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥७२॥

अन्वयः—ततः, बली हनुमान्, गृध्रस्य सम्पातेः, वचनात् शतयोजनविस्तीर्णं लवणार्णवम् पुप्लुवे।

व्याख्या—ततः=प्रस्थानानन्तरम्, बली=अपरिमेयबलशाली, हनुमान्=प्रसिद्धः, गृध्रस्य=जटायुज्येष्ठभ्रातुः, सम्पातेः=तन्नामकस्य, वचनात्=वाक्यात्, शतयोजनविस्तीर्णं=चतुःशतक्रोशमितविस्तरं, लवणार्णवम्=क्षारसमुद्रम्, पुप्लुवे=उल्लङ्घितवान्।

समासः—शतं योजनानि शतयोजनानि, शतयोजनानि विस्तीर्णो यः, स शतयोजनविस्तीर्णस्तं शतयोजनविस्तीर्णम्, लवणस्यार्णवो लवणार्णवस्तं लवणार्णवम्।

व्याकरणम्—पुप्लुवे=प्लु+ङ्+लिट्।

वाच्यान्तरम्—हनुमता शतयोजनविस्तीर्णो लवणार्णवः पुप्लुवे।

कोषः—योजनं क्रोशतुर्यकमिति कोषः।
विस्तारो विस्तृतिर्मता।
सैन्धवं लवणं क्षारमिति कोषः।
अर्णवस्तूदधिः पारावारः पाथोधिरित्यपि।

सारार्थः—दक्षिणदिशि प्रस्थितानां महतां जाम्बवदङ्गदनीलनल-हनुमतां मध्ये बलवत्तमो हनुमान् सम्पातिदर्शितमार्गेण, लङ्कामभिलक्ष्य शतयोजनायामं क्षारसागरमुत्तीर्णवान् ।

भाषाऽर्थः—किष्किन्धा से कूच करने के बाद, दक्षिण सागर के तट पर सम्पाति नाम के गृद्ध के कहने के अनुसार, सौ योजन चौड़े समुद्र को हनुमान जी लांघ गये ॥७२॥

**तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।**
**ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥७३॥**

अन्वयः—तत्र रावणपालितां लङ्कां पुरीं समासाद्य, अशोकवनिकां गतां ध्यायन्तीं सीतां ददर्श, (हनुमानिति शेषः) ।

व्याख्या—तत्र = दक्षिणसागरस्य दक्षिणे तटे, रावणपालिताम् = रावणेन पालितां = रावणरक्षिताम्, पुरीं = नगरीम्, लङ्कां = एतन्नामिकाम्, समासाद्य = प्राप्य, भवने भवनेऽन्वेषयन्, अन्ते, अशोकवनिकां = अशोकारण्यं, गतां = वर्त्तमानाम् = तिष्ठन्तीमिति शेषः । ध्यायन्तीं = रामचरणाम्बुजं स्मरन्तीं, सीताम् = जानकीं, ददर्श = दृष्टवान् ।

समासः—रावणेन पालिता रावणपालिता तां रावणपालिताम्, अशोकानां वनिका अशोकवनिका तां अशोकवनिकाम् ।

व्याकरणम्—समासाद्य = सम् + आङ् + सद् + णिच् + ल्यप् । ददर्श = दृश् + लिट् ।

वाच्यान्तरम्—तेन हनुमता सीता ददृशे ।

कोषः—पूः स्त्री पुरीनगर्य्यौ वा पत्तनं पुटभेदनमित्यमरः ।
सीता विदेहतनया सीता लाङ्गूलपद्धतिः ।
वञ्जुलोऽशोक इत्यमरः ।

सारार्थः—समुद्रमुल्लंघ्य लङ्काप्रवेशादौ लङ्कां नाम राक्षसीमेकेन मुष्टिना जित्वा, रात्रौ विड़ालसदृशं रूपं विधाय, गृहे गृहे सीतां मार्गमाणो नहि तां तत्रावलोक्य निर्वेदमापन्नो हनूमान् अन्ते उत्साहं वर्धयित्वा, पुनरन्वेषणतत्परोऽन्तेऽशोकवनिकायां रामं ध्यायन्तीं तां ददर्शेति ।

भाषार्थः—दक्षिण समुद्र के दक्षिण तट पहुँचने पर, हनूमान् लङ्का में प्रवेश कर सीता को ढूँढते २ आखिर में अशोक वनिका में शिंशपा ( सीसम ) वृक्ष के नीचे राम के ध्यान करती हुई उनको देखे ॥७३॥

निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च ।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥७४॥

अन्वयः—(हनूमान्) अभिज्ञानं निवेदयित्वा, प्रवृत्तिं च विनिवेद्य, वैदेहीं च समाश्वास्य, तोरणं मर्दयामास ।

व्याख्या—हनूमान् , ( सीतायै ), अभिज्ञानम् = रामाङ्गुलीयकरूपं परिचायकं, निवेदयित्वा = समर्प्य, ततः = तदन्तरम् , प्रवृत्तिं = वार्त्तां, सुग्रीवसख्यादिकां, विनिवेद्य = उक्त्वा, वैदेहीं = जानकीं, समाश्वास्य = सन्तोष्य, ( सद्यस्ते पतिः सैन्यानि आदाय आगमिष्यतीत्येवं सान्त्वयित्वा ) तोरणं = अशोकवनिकाबहिर्द्वारम् , च = अपि, मर्दयामास = चूर्णयामास ।

व्याकरणम्—निवेदयित्वा = नि + विद् + णिच् + क्त्वा । विनिवेद्य = वि + नि + विद् + णिच् + ल्यप् । समाश्वास्य = सम् + आङ् + श्वस् + णिच् + ल्यप् । मर्दयामास = मर्द + णिच् + लिट् ।

वाच्यान्तरम्—तेन हनुमता तोरणो मर्दयामासे ।

कोषः—तोरणं तु बहिर्द्वारमिति शब्दार्णवः ।
वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्तथाऽव्यय इत्यमरः ।
अभिज्ञानं ज्ञापकं स्यात्परिचायकमित्यपि ।

सारार्थः—हनूमान् अशोकवनिकामध्ये सीतां व्रतादिभिः, पतिविरहेण चातिकृशां, आलक्ष्य, प्रथमं रामकथाकथनेन तत्परीक्षामालापं च कृत्वा, पश्चाद्विश्वसितायै तस्यै रामाङ्गुरीयकं दत्वा, रामसुग्रीवयोः सख्यं, सेनासंघटनं, रामचिह्नं, सीताविरहेण रामचेष्टां च विनिवेद्य मासद्वयमध्ये एव ससैन्यः समित्रो राम आगमिष्यति, वा मत्पृष्ठमारुह्याद्यैव तं पश्य, अहमेव केवलः सरावणां लङ्कां चूर्णयितुं दक्षः, किमन्यैर्महद्भिः कपिभिरित्युक्ते जातशङ्कायाः प्रतीत्यर्थं स्वविराट्स्वरूपं च

प्रदर्श्य, रावणदर्शनार्थं किञ्चिदुपद्रवकरणं निश्चित्य, अशोकवनिका-वहिर्द्वारं चूर्णीकृतवान्।

भाषार्थः—हनूमान जी, सीता जी को मुद्रिका दे कर, और सुग्रीवसे मैत्री, वाद सेना संघटन आदि हाल कह कर, जल्दी आवेंगे, घबडाना नहीं, राम के बाण के आगे रावण नहीं ठहर सकते, इत्यादि वातों से आश्वासन देकर तोरण (गुमज़) को तोड़ ड़ाले ॥७४॥

पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।
शूरमक्षं च निष्पिष्य ग्रहणं समुपाविशत् ॥७५॥

अन्वयः—पञ्च सेनाग्रगान्, सप्त मन्त्रिसुतान् अपि हत्वा, शूरम् अक्षं च निष्पिष्य ग्रहणं समुपाविशत्।

व्याख्या—हनूमान्, पञ्च = पञ्चसंख्यकान् सेनाग्रगान् = सेनापतीन्, पिंगलनेत्रादीन्, ससैन्यानिति शेषः। सप्त = सप्तसंख्यकान् = जाम्बमाल्यादीन्, अपि = निश्चयेन, हत्वा = निहत्य, शूरं = शौर्ययुक्तं, अक्षं = अक्षयकुमारम्, च = अपि, निष्पिष्य = विनाश्य, = चूर्णीकृत्य, ग्रहणम् = मेघनादप्रयुक्तब्रह्मास्त्रबन्धनम्, ब्रह्मणः प्रतिष्ठारक्षणाय, समुपागमत्, प्राप्त इत्यर्थः।

समासः—सेनानां अग्रे गच्छन्तीति सेनाग्रगाः, तान् सेनाग्रगान्, मन्त्रिणः सुता मन्त्रिसुतास्तान्।

व्याकरणम्—हत्वा = हन् + क्त्वा। निष्पिष्य = निस् + पिष् + ल्यप्। समुपाविशत् = सम् + उप + विश् + लङ्।

वाच्यान्तरम्—तेन हनुमता ( बन्धनं ) ग्रहणं समुपाविश्यत्।

कोषः—ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः।
वरुथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामित्यमरः।
मन्त्री धीसचिवोऽमात्य इत्यमरः।
आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी इत्यमरः।
शूरो वीरश्च विक्रान्त इत्यमरः।

सारार्थः—हनूमान् सीतां प्राप्य, सफलसागरपारपरिश्रमः, स्वबाहुबलपरिचयदानार्थं रावणप्रभावरूपदर्शनार्थं च प्रथममशोकवनिकायामुपद्रवं, तद्रक्षकान् राक्षसांश्च निहत्य, पुनरागतान्

सैन्यनायकान् मन्त्रिसुतांश्च हत्वाऽन्ते मेघनादेन तुमुलं समरं विधाय तत्प्रयुक्तब्रह्मास्त्रबन्धनाधीनो जात इति ।

भाषाऽर्थः—पांच सेनापतिको, सात मन्त्रिपुत्रों को मार, शूर अक्षयकुमार को चूर चूर कर, पीछे ब्रह्मास्त्र से बान्धे गये ॥७५॥

**अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।**
**मर्षयन्राक्षसान् वीरो यन्त्रिणस्तान्यदृच्छया ॥७६॥**

अन्वयः—वीरः हनूमान्, पैतामहात् वरात्, अस्त्रेण उन्मुक्तं, आत्मानं, ज्ञात्वा, यदृच्छया, तान् यन्त्रिणः राक्षसान् मर्षयन् आस्ते इति ।

व्याख्या—वीरः = अनेकराक्षससंहारकः, हनूमान्, पैतामहात् = पितामहदत्तात्, वरात् = मदस्त्रादपि निर्मुक्तिर्भविष्यतीति वरादिति भावः । अस्त्रेण = ब्रह्मास्त्रेण, उन्मुक्तं = परित्यक्तम्, आत्मानं = निजम्, ज्ञात्वा = विदित्वा, यदृच्छया = स्वेच्छया, रावणसभागमनहेतुना, तान् = यन्त्रिणः = बन्धकान्, राक्षसान् = मेघनादकिङ्करान्, मर्षयन् = तदपराधान् क्षममाणः, आस्ते ।

व्याकरणम्—ज्ञात्वा = ज्ञा + क्त्वा । मर्षयन् = मृष् + णिच् + शतृ । अत्राऽऽस्ते इति क्रियाध्याहारो बोध्यः ।

वाच्यान्तरम्—वीरेण हनुमता आसे ।

कोषः—आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियामित्यमरः ।
राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रपआसर इत्यमरः ।

सारार्थः—वस्तुतो ब्रह्मास्त्रेणापि अवशीभूतः स हनूमान् मार्गे नानोपद्रवविधायकानां राक्षसानामखिलमुपद्रवं क्षममाणो रावणसभागमनधिया मौनावलम्बनमेवाङ्गीकृतवान् ।

भाषाऽर्थः—ब्रह्मा जी के वरप्रदान से ब्रह्मास्त्र से भी छुटकारा पाये हुए हनुमान् जी, डोरी से बान्ह कर ले जाने वाले राक्षसों का अपराध सहते हुए आगे चले ॥७६॥

**ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् ।**
**रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥७७॥**

अन्वयः—ततः, महाकपिः, मैथिलीं सीतां, च ऋते, लङ्कां पुरीं दग्ध्वा, रामाय प्रियम्, आख्यातुम्, पुनः, आयात् ।

व्याख्या—ततः = रावणदर्शनसंवादाद्यनन्तरम् , मैथिलीं = मिथिलेशकन्यकाम् , सीताम् = एतन्नामिकाम् , सीतावासस्थानम् , चकारात् विभीषणगृहमपि, ऋते = विना, सर्वां, लङ्कां = एतन्नामिकां पुरीं = नगरीं, दग्ध्वा = निजपुच्छप्रज्वालितज्वालया, सन्दह्य = भस्मसात्कृत्वा, सीतोपलब्धिसमुत्सुकाय रामाय, प्रियम् = सीतादर्शनरूपं, आख्यातुम् = निवेदयितुम् , पुनः = निवृत्य, आयात् = आगतः ।

समासः—महाँश्चासौ कपि र्महाकपिः ।

व्याकरणम्—दग्ध्वा = दह् + क्त्वा । आख्यातुम् = आङ् + ख्या + तुमुन् । आयात् = आङ् + या + लङ् ।

वाच्यान्तरम्—महाकपिना पुनरायायत ।

सारार्थः—हनूमान् रावणसभां गत्वा रावणाज्ञया राक्षसकृतवन्हियोजनविधानवता पुच्छेन सीतास्थानं विभीषणभवनं च विहाय सकलां लङ्कां भस्मसात्कृत्वा, पुनः सीतां प्रणम्य समुद्रमुल्लङ्घ्य, उत्तरतटस्थान् प्रतीक्षकान् वानरान् सन्तोष्य, तैः सह मधुवने मधूनि पीत्वा, ततः सत्वरं सीतादर्शनवृत्तान्तनिवेदनाय किष्किन्धास्थं रामं प्रत्यागतः ।

भाषार्थः—बाद हनुमान जी सीता के वासस्थान और विभीषण के महल को छोड़, सारी लङ्कापुरी को खाक कर, राम से प्रिय सन्देशा कहने के लिये लौट आये ॥७७॥

**सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।**
**न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥७८॥**

अन्वयः—अमेयात्मा सः, महात्मानं रामं, अभिगम्य, प्रदक्षिणाम्, कृत्वा, तत्त्वतः सीता दृष्टा इति न्यवेदयत् ।

व्याख्या—अमेयात्मा = अप्रमेयबलः, सः = हनुमान् , महात्मानं = परमात्मानम् , रामम् = एतन्नामकम् , अभिगम्य = संमुखं गत्वा, प्रदक्षिणम् , कृत्वा = विधाय, तत्त्वतः = वस्तुतः, सीता = जानकी, भवत्प्राणप्रियेतिभावः । दृष्टा = अवलोकिता, संभाषिता चेति शेषः, वा सीता दृष्टा इति, तत्त्वतः = संक्षेपतः, सर्वं रामाय न्यवेदयत् = कथयामास, । रावणपुर्यां तव विरहेणान्नपानमपि

विहाय भवद्दर्शनसंभावनया कथं कथमपि प्राणान् धारयति । मासद्वयोर्ध्वं निराशा भूत्वा, न सा जीवनं धारयिष्यतीति ।

समासः—महान् आत्मा यस्यासौ महात्मा, तं महात्मानम् । अमेयः (अपरिच्छेद्यः) आत्मा यस्य सः अमेयात्मा ।

व्याकरणम्—अभिगम्य = अभि + गम् + ल्यप् । कृत्वा = कृ + क्त्वा । न्यवेदयत् = नि + विद् + णिच् + लङ् ।

वाच्यान्तरम्—अमेयात्मना तेन महात्मना न्यवेद्यत ।

कोषः—तत्वतो वस्तुतो ध्रुवम् इति कोषः ।

सारार्थः—हनूमान् रामस्य समीपं गत्वा प्रदक्षिणां प्रणामं च कृत्वा, यथा सीता अवलोकिता, तथा सर्वं सत्यं सत्यं तस्मै कथयामास ।

भाषार्थः—अमित बलशाली हनुमान् जी, महात्मा रामजी को प्रदक्षिणा और प्रणाम कर, उनसे 'सीता मैंने देखी' यह कहे ॥७८॥

इति सुन्दरकाण्डकथाबीजम् ।



## अथ युद्धकाण्डकथाऽऽरभ्यते ।

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥७९॥

अन्वयः—ततः, सुग्रीवसहितः, (रामः) महोदधेः, तीरं, गत्वा, आदित्यसंनिभैः शरैः, समुद्रं, क्षोभयामास ।

व्याख्या—ततः = हनुमद्वदनात् सीतावृत्तान्तज्ञानानन्तरं सर्वान् वानरान् भल्लूकांश्चैकीकृत्य, सुग्रीवसहितः, (सुग्रीवो वानराणां राजा, तेन संयुतः सन्) महोदधेः = शतयोजनविस्तरस्य समुद्रस्य, तीरं = तटं, गत्वा = उपगम्य, (सागरं दुष्पारमवगम्य, सागरस्यानुकूलकरणाय त्रिरात्रं तत्तटे कुशासने उपविश्योपवासो रामेण कृतः; तथापि समुद्रस्यानुकूल्यं न किमपि दृष्ट्वा संजातामर्षः सन्) आदित्यसन्निभैः = सूर्यसदृशैः, शरैः = बाणैः, अतितीक्ष्णैरित्यर्थः । समुद्रम् = क्षारसागरं, क्षोभयामास = आकुलीचकार ।

समासः—सुग्रीवेण सहितः, सुग्रीवसहितः। महाँश्चासौ उदधि-महोदधिः। अदितेरपत्यं पुमानादित्यः सूर्यः, तस्यादित्यस्य सन्निभाः सदृशा ये ते आदित्यसन्निभाः, तैरादित्यसन्निभैः।

व्याकरणम्—गत्वा=गम्+क्त्वा। क्षोभयामास=क्षुभ+णिच्+लिट्।

वाच्यान्तरम्—सुग्रीवसहितेन रामेण समुद्रः क्षोभयाञ्चक्रे।

कोषः—महोदधिरपांनाथोऽम्भोधिः पाथोधिवारिधी इतिकोषः।
सूरसूर्यार्यमादित्यद्वादशात्मदिवाकरा इत्यमरः।

सारार्थः—ससैन्येन सुग्रीवेण सह रामो दक्षिणसमुद्रस्योत्तर-तटमुपगम्य 'कथं सैन्यं तरिष्यति दुस्तरं सागर'-मिति चिन्तितः; समुद्रस्य प्रसादं विना नैतद्भविष्यतीति तत्तटे त्रिरात्रमुपवासनिरतः सन् स्थितोऽपि समुद्रस्य किमपि प्रसन्नतासूचकं लक्ष्म नानुभूय, पश्चात्स्वापमानजनितामर्षज्वलितोऽसौ सूर्यदीप्तितुल्यैः शरैः समुद्रं व्याकुलीकृतवानिति।

भावार्थः—तब सुग्रीव के साथ रामजी, दक्षिण समुद्र के उत्तर किनार पर पहुँच कर, सूर्य के समान चमकीले बाणों से, समुद्र को भय दिखाये॥ ७९॥

**दर्शयामास चात्मानं समुद्रः सरितां पतिः।**
**समुद्रवचनाच्चैव नलं सेतुमकारयत्॥८०॥**

अन्वयः—सरितां पतिः, समुद्रः, च आत्मानं दर्शयामास। समुद्रवचनात् च एव; नलं; सेतुम्, अकारयत्।

व्याख्या—सरितां=नदीनां, पतिः=अधिपः, समुद्रः=सागरः, अर्थात् सपत्नीकः समुद्रः पुरुषरूपेणेतिभावः। च=अपि, रामाय, आत्मानम्=स्वरूपम्, दर्शयामास=प्रदर्शितवान्। अपराधक्षमापनहेतवे शङ्कितः समुद्र उपस्थित इति शेषः। ततः प्रसन्नो रामः, समुद्रवचनात्=सागरोपदेशात्, नलं=एतन्नामकवानरद्वारकं, सेतुं=जलोपरि स्थलरूपमार्गं, अकारयत्=कारितवान्, समुद्रप्रार्थनया नलेन सेतुं रचयामासेति।

व्याकरणम्—दर्शयामास=दृश्+णिच्+लिट्। अकारयत्=कृ+णिच्+लङ्।

वाच्यान्तरम्—समुद्रेण आत्मा दर्शयामासे । रामेण नलं-नलेन वा सेतुः अकार्यत ।

कोष:—अथ नदी सरिदित्यमरः । स्यात्सेतुर्जलमार्गोऽस्त्रीतिकोषः ।

सारार्थः—कोपज्वलितं राममवगम्य, सशङ्कः सागरः प्रत्यक्षरूपेण रामस्यान्तिकमागत्य स्वकृतापराधं क्षमापयन्, पश्चात्; अनेन अनेन प्रदेशेन शीघ्रतया भविष्यतीति वदन्, नल एष गोलाङ्गूलो वानरः विश्वकर्मणः पुत्रोऽस्ति, मतङ्गमुनेः शापाज्जलेऽनेन विक्षिप्तं वस्तु निःसारवस्तुवज्जलोपरि तिष्ठतीत्यपि उक्त्वा, पुनर्जले प्रविष्टस्ततो नल द्वारा सैन्योत्तारणाय रामः सेतुं रचयामास ।

भाषार्थः—डरे हुए समुद्र, रामजी के सामने विनम्र पूर्वक हाजिर हुए । तब उसी के कहने के माफिक रामजी, नल के द्वारा ( जरिये ) समुद्र में बांध बान्हे ॥८०॥

तेन गत्वा पुरीं लङ्कां हत्वा-रावणमाहवे ।
रामः सीता मनुप्राप्य परां व्रीड़ा मुपागमत् ॥८१॥

अन्वयः—रामः, तेन, लङ्कां, पुरीं गत्वा, आहवे रावणं हत्वा, सीतां, अनु प्राप्य, परां व्रीड़ाम्, उपागमत् ।

व्याख्या—तेन = सेतुना, लङ्कां पुरीं = रावणराजधानीम्; गत्वा = प्राप्य, रावणापमानितेन विभीषणेन मिलितो रामः, आहवे = संग्रामे, रावणं = लङ्काधिपतिं, सपुत्रामात्यबान्धवमिति योज्यम् । हत्वा = घातयित्वा, सीतां = जानकीं, अनुप्राप्य = अनुगृहीत्वा, पराम् = परमाम्, व्रीड़ाम् = लज्जाम्, उपागतः = प्राप्तः, अर्थात् कामिनो दशाननस्य भवने वर्त्तमानायाः सीताया अङ्गीकारे लोकापवादशङ्कया लज्जापरवशो जातः ।

व्याकरणम्—गत्वा = गम् + क्त्वा । हत्वा = हन् + क्त्वा । अनुप्राप्य = अनु + प्र + आप् + ल्यप् । उपागतः = उप + आ + गम + कर्तरि क्तः ।

वाच्यान्तरम्—रामेण परा व्रीडा उपागता ।

कोषः—मन्दाक्षं ह्री स्त्रपा व्रीड़ा लज्जा सापत्रपान्यत इत्यमरः ।

सारार्थः—निर्मितसेतुना रामा लङ्कां गत्वा रणे दशाननं निहत्य, सीतां प्राप्य, चिरात् परगृहे वर्त्तमानाऽपि सीता अविचार्य गृहीतेति लोकलज्जावशीभूतो जातः ।

भाषाऽर्थः—उस बान्ह से लङ्का जाकर रामजी, लड़ाई में रावण को मार, पीछे सीता पाये, और पराये के घर में देर से ठहरी हुई स्त्री को भी विना विचारे रख लिये, इस लोकशङ्का से लज्जित हुए ॥८१॥

तामुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥८२॥

अन्वयः—ततः रामः, जनसंसदि, तां परुषम्- उवाच । सती सा सीता अमृष्यमाणा ज्वलनं विवेश ।

व्याख्या—ततः = लज्जाजातानन्तरं, लज्जादूरीकरणाय, रामः, जनसंसदि = वानरसभायाम् , तां = सीताम्, परुषम् = कठोरम्, (मर्मकृन्तनं वचः) उवाच = अवदत् । जनसमक्षे यदुक्तं तल्लोकज्ञापनाय, स्वयं तु रामः सीताया अकथनीयं सतीत्वं जानात्येवेति । अर्थात् एतावद्दिनमेतस्य कामातुरस्य गृहे वसन्त्याः कथं सतीत्वरक्षणं तव निष्पन्नमिति हेतोः स्वीयपातिव्रत्यस्य परीक्षा जनानां पुरत एव दर्शनीयेति रामेणादिष्टा, सा = प्रसिद्धा, लज्जा दुःखाभ्यामतिनताङ्गी, सती = पतिव्रता, सीता, अमृष्यमाणा = असहमाना, ज्वलनम् = अग्निम्, विवेश = प्रविष्टेति ।

समासः—जनानां वानराणां संसद् सभा इति जनसंसद्, तस्यां जनसंसदि ।

व्याकरणम्—उवाच = ब्रू + लिट् । अमृष्यमाणा = मृष + शानच् + टाप् । मृष्यमाणा—ततो नञ्समासः । विवेश = विश् + लिट् ।

वाच्यान्तरम्—रामेण सा ऊचे । अमृष्यमाणया सीतया ज्वलनो-विविशे ।

कोषः—कठोरं कर्कशं, तीक्ष्णं परुषमिति शब्दार्णवः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपादित्यमरः ।
पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रतेत्यमरः ।

सारार्थः—वानरादीनां समक्षे सीतायाः शङ्कानाशाय परीक्षा भवितुमतियुक्तेति लोकरीतिपरमचतुरो रामस्तां सतीत्वरक्षणप्रत्ययोपायकरणमादिशत्, सीताऽपि बहिस्तत्कथया खेदं प्रकटयन्ती सत्वरमेव प्रज्वलन्त्यां रचितचितायां प्रविष्टा, ततो जीवन्तीं पूर्वतोऽपि

समधिकशोभाशालिनीं सीतां विलोक्य चकितचित्ताः सर्वे तस्याः प्रशंसां चक्रुः ।

भाषाऽर्थः—राम जी सब लोगों के सामने ही सीता से कठोर बात कहे । तब उस वचन का न सहती हुई सीता झट अग्नि में घूस गयी ॥८२॥

ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ।
कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥८३॥
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ।
बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः ॥८४॥

अन्वयः—ततः, अग्निवचनात्, सीतां विगतकल्मषां ज्ञात्वा महात्मनः राघवस्य, तेन महता कर्मणा सचराचरं, सदेवर्षिगणं त्रैलोक्यं तुष्टम्, (ततः) सर्वदैवतैः पूजितः सम्प्रहृष्टः रामः बभौ ।

व्याख्या—ततः = सीतासतीत्वपरीक्षानन्तरम्, अग्निवचनात् = वह्निवाक्यात्, "विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघवः" इति रूपात्, सीताम् = रावणगृहवर्त्तमानां जानकीं, विगतकल्मषां = निष्पापाम्, ज्ञात्वा = जनान् विज्ञापयित्वा, महात्मनः = सर्वश्रेष्ठस्य, राघवस्य = रामस्य, तेन = सीतावह्निप्रवेशकारकेन, महता = अतिविस्मयकारिणा, वा परमप्रशंसनीयेन, कर्मणा = विधानेन, सचराचरम् = सजङ्गमस्थावरं, सदेवर्षिगणम् = देवर्षिवृन्दसमन्वितं, त्रैलोक्यम् = भूर्भुवःस्वरात्मकं, तुष्टम् = सन्तुष्टं, जातम्, (ततः) सर्वदैवतैः = सकलदेवैः, पूजितः = संमानितः, प्रशंसितो वा, अतएव संप्रहृष्टः = सम्यक् हृष्टान्तःकरणः, रामः = अनुपमसतीपतिः, बभौ = शुशुभे ।

समासः—अग्नेर्वचनं, अग्निवचनं, तस्मादग्निवचनात्, विगतः (दूरीभूतः) कल्मषः लोकशङ्कापवादरूपो यस्याः सा विगतकल्मषा, तां विगतकल्मषाम्, सर्वाणि दैवतानि सर्वदैवतानि, तैः सर्वदैवतैः । त्रयाणां लोकानां समाहारस्त्रिलोकम्, त्रिलोकस्य भावस्त्रैलोक्यम् । चराश्च अचराश्च चराचराः, तैश्चराचरैः सह वर्त्तते यत् इति सचराचरम् । देवाश्च ऋषयश्च देवर्षयः, देवर्षीणां गणा इति देवर्षिगणा स्तैर्देवर्षिगणैः सह वर्त्तते यत्तत् सदेवर्षिगणम् । महानात्मा यस्य सः महात्मा ।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्याकरणम्—ज्ञात्वा = ज्ञा + क्त्वा । तुष्टमित्यस्याग्रे बभूवेतिक्रियाध्याहारो बोध्यः । बभौ = भा + लिट् ।

वाच्यान्तरम्—सदेवर्षिगणेन सचराचरेण त्रैलोक्येन तुष्टेन बभूवे । पूजितेन सम्प्रहृष्टेन रामेण बभे ।

कोषः—अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ।

अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषमित्यमरः ।

पूजितो महितो मान्य इति कोषः ।

सारार्थः—सीतायाः परीक्षानन्तरं, अग्निवाक्यात् सर्वेभ्यो वानरादिभ्यो जानक्या अक्षुणं पातिव्रत्यं विज्ञाप्य त्रैलोक्यं चकितं विधाय, देवैः पूजितो रामो लङ्कातटे शुशुभे ।

भाषार्थः—तब अग्नि के कहने से सीता को शुद्ध समझ, तीनों लोग में, चर अचर जीव को अपने आश्चर्य कर्म से सन्तुष्ट करते हुए रामजी, देवों से पूजा पाकर सुशोभित हुए ॥८३॥८४॥

**अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।**
**कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥८५॥**

अन्वयः—लङ्कायां राक्षसेन्द्रं विभीषणं च अभिषिच्य तदा कृतकृत्यः विज्वरः रामः प्रमुमोद ह ।

व्याख्या—लङ्कायां = रावणराजसिंहासने, राक्षसेन्द्रं = राक्षसमुख्यम् , विभीषणम् = एतन्नामकम् , रावणकनिष्ठभ्रातरम् , च = एव, अभिषिच्य = राज्याभिषेकं कृत्वा, तदा = अभिषेकनिवृत्त्यनन्तरम्, कृतकृत्यः = कृतोपकारप्रतीकारः, विज्वरः = विगतचिन्ताज्वरः, अभिलाषस्य पूर्त्तित्वात्, प्रमुमोद = प्रकर्षेण मोदं प्राप, ह = हर्षाधिक्ये ।

समासः—राक्षसानामिन्द्रो राक्षसेन्द्रस्तं राक्षसेन्द्रम् । विशेषेण भीषणो भयङ्कराकार इति विभीषणः, विगतो ज्वरो यस्य स विज्वरः ।

व्याकरणम्—अभिषिच्य = अभि + षिच् + ल्यप् । प्रमुमोद = प्र + मुद + लिट् ।

वाच्यान्तरम्—कृतकृत्येन विज्वरेण रामेण प्रमुमुदे ।

कोषः—निश्चिन्तो विज्वरः सौम्य उत्कण्ठारहितस्तथेति शब्दार्णवः ।

सारार्थः—रावणराज्यैश्वर्यं विभीषणं विधाय, निर्दोषां सीतां चादाय सकलाभीष्टसिद्ध्या सर्वथा प्रसन्नो रामो लङ्कातो निवृत्त्यर्थमुद्यत इति ।

भाषाऽर्थः—लङ्का में रावण के राजगद्दी पर विभीषण को तिलक देकर, सर्वथा निश्चिन्त रामजी बड़े हर्ष में प्राप्त हुए ॥८५॥

देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥८६॥

अन्वयः—देवताभ्यः वरं प्राप्य, वानरान् समुत्थाप्य सुहृद्वृतः रामः पुष्पकेण अयोध्यां प्रस्थितः।

व्याख्या—देवताभ्यः = इन्द्रादिदेवेभ्यः, (तदानीं रावणवधश्रवण-हर्षसंयुतेभ्य इति बाज्यम्) वरं=आशीर्वादम् प्राप्य, = लब्ध्वा, अर्थात् 'गते रणेऽस्मिन्, मृता अपि वानराः सुप्तोत्थिता इवोत्तिष्ठन्तु इत्येवं रूपं, संप्रार्थ्य तेन, वानरान् = कपीन्, ऋक्षाँश्च, समुत्थाप्य = उत्था-पयित्वा, अथ सर्वे स्वस्वदेशं गच्छत! 'युष्माकं प्रसादात् दुर्जयो-रावणो रिपुः घातितः, एवं संबोध्य, सुहृद्वृतः = सुहृद्भिः कतिपयैः सुग्री-वविभीषणहनुमदङ्गदादिभिः वृतः = परिवेष्टितः सन्, पुष्पकेण = व्योमयानेन, अयोध्यां = अयोध्याभिमुखं, प्रस्थितः = चलित इति।

समासः—सुहृद्भिर्वृतः सुहृद्वृतः।

व्याकरणम्—प्राप्य = प्र + आप् + ल्यप्। समुत्थाप्य = सम् + उत + ष्ठा + णिच् + ल्यप्।

वाच्यान्तरम्—अयोध्यामुद्दिश्य रामेण प्रस्थानं चक्रे।

कोषः—व्योमयानं तु पुष्पकमितिशब्दार्णवः।
विमानं तु पुष्पकमित्यमरः।
अथ मित्रं सखा सुहृदित्यमरः।

सारार्थः—रावणनिधनानन्तरं परममुदिता देवाः रामसत्कारार्थ-मागताः। तेभ्यो मृतवानरसंजीवनाय वरं संप्रार्थ्य, तेनैव तान् जीव-यित्वा, तान् गमनायानुज्ञां दत्वा, स्वराजधानीगमनाय व्योमयान-मादाय मित्रवर्गेण सहितः रामोऽयोध्यां प्रति यात्रां कृतवान्।

भाषाऽर्थः—आये हुए देवताओं से, मरे वानरों के जीने के लिये, वर मांग कर उनको जिला कर, बाद कुछ इष्ट मित्रों के साथ, राम जी हवाई जहाज से अयोध्या के तरफ रवाना हुए ॥८६॥

भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः।
भरतस्यान्तिके रामो हनुमन्तं व्यसर्जयत् ॥८७॥

अन्वयः—सत्यपराक्रमः रामः, रामः भरद्वाजाश्रमं गत्वा भरतस्य अन्तिके हनुमन्तं व्यसर्जयत् ।

व्याख्या—सत्यपराक्रमः = अव्यर्थप्रहारः, रामः = रमणीयः, रामः= एतन्नामकः, भरद्वाजाश्रमम् = भरद्वाजमुनेराश्रमं, गत्वा = उपगम्य, लङ्कातः प्रस्थितः प्रयागे एव पुष्पकादवतीर्णः, इति भावः । तत्र भरद्वाजेन 'एकं दिनमत्र स्थातव्य' मिति प्रार्थितः, तद्दिवसे एव चतुर्दशवर्षपूर्त्तेः "चतुर्दशवर्षादेकदिनमपि चेदधिकं भविष्यति तदाऽहं वह्नौ प्रवेदयामि" इति भरतवाक्यस्मरणात् तत्क्षणे एव, भरतस्य = कैकेयीपुत्रस्य नन्दिग्रामस्थस्येति शेषः, अन्तिके = समीपे, हनूमन्तं = अञ्जनानन्दनं, व्यसर्जयत् 'त्वमग्रे गत्वा भरताय मम प्रत्यागमनं निवेदय' इति कुशलकथनाय वेगवन्तं हनुमन्तं प्रेरितवान् ।

समासः—भरद्वाजस्याश्रमो भारद्वाजाश्रमस्तं भरद्वाजाश्रमम् । सत्यः = अव्यर्थः, पराक्रमा यस्य सः सत्यपराक्रमः ।

व्याकरणम्—गत्वा = गम् + क्त्वा । व्यसर्जयत् = वि + सृज् + णिच् + लङ् ।

वाच्यान्तरम्—रामेण हनुमान् व्यसर्ज्यत ।

कोषः—उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययमित्यमरः ।

सारार्थः—रामः पुष्पकमारुह्य प्रयागे भरद्वाजमुनेर्दर्शनार्थं तदाश्रममुत्तीर्णः । परन्तु रावणं हत्वा प्रतिनिवृत्तं रामं स्नेहेन दिनमेकमत्र स्वस्थो भवेति तेन निवेदिते, भरतस्य प्रतिज्ञातसमयाधिकत्वात् तत्सकाशे चिन्ताऽनुत्पन्नार्थं हनूमन्तं प्रेषितवान् ।

भाषाऽर्थः—राम हवाई जहाज से भारद्वाज मुनि के आश्रम में उतर, उनके कहने से एक दिन विलम्ब होने के सबब, भरत जी को, अपने लौट आने की खबर देने के लिए हनूमानजी को छोड़े ॥८७॥

पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ।
पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥८८॥

अन्वयः—तदा सुग्रीवसहितः रामः पुनः तत् पुष्पकं समारुह्य, आख्यायिकां जल्पन् तदा नन्दिग्रामं ययौ ।

व्याख्या—तदा = भरद्वाजाश्रमान्निर्गमनसमये, सुग्रीवसहितः = सुग्रीवप्रभृतिमित्रवर्गैर्युक्तः, रामः, पुनः, तत पुष्पकं = व्योमयानम्, समारुह्य = आरोहणं कृत्वा, आख्यायिकाम् = पूर्ववृत्तकथां, भरत-

प्रशंसामित्यर्थः । जल्पन् = कथयन् , सुग्रीवायेतिशेषः । नन्दिग्रामम् = तत्कालिकभरतवसतिम् , ययौ = समागतः ।

समासः—सुग्रीवेण सहितः, सुग्रीवसहितः ।

व्याकरणम्—जल्पन् = जल्प + शतृ । समारुह्य = सम् + आङ् + रुह + ल्यप् । ययौ = या + लिट् ।

वाच्यान्तरम्—आख्यायिकां जल्पता सुग्रीवसहितेन रामेण नन्दिग्रामो ययै ।

सारार्थः—पुनर्भारद्वाजाश्रमात् पुष्पकमारुह्य सुग्रीवेण सह पूर्वानुभूतालापं कुर्वन् रामो नन्दिग्राममुपागतः ।

भाषाऽर्थः—फिर भारद्वाज ऋषि के आश्रम से विदा हो, हवाई जहाज पर सवार होकर, सुग्रीव आदिओं से गुजरी हुई बातें करते हुए, भरत के निवास ( नन्दिग्राम ) स्थान पहुँचे ॥८८॥

**नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः ।**
**रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥८९॥**

अन्वयः—भ्रातृभिः सहितः, अनघः रामः, नन्दिग्रामे जटां हित्वा, अनु सीतां प्राप्य पुनः राज्यं अवाप्तवान् ।

व्याख्या—भ्रातृभिः = भरतलक्ष्मणशत्रुघ्नैः, सहितः = सम्मिलितः, समन्वितः, अनघः = पापरहितः, पालितपितृप्रतिज्ञ इत्यर्थः, रामः, जटां = शिरःकेशजूटरूपां, हित्वा = संमुण्ड्य, अनु = पश्चात् ,सीतां = वैदेहीं, प्राप्य = आश्लिष्य, सीतोचितं स्वस्यापि रूपं विधाय इति भावः, पुनः = पूर्वोत्सृष्टं, राज्यं = आप्तवान् = प्राप्तः ।

व्याकरणम्—हित्वा = ओहाक् + क्त्वा । अनुप्राप्य = अनु + प्र + आप् + ल्यप् । आप्तवान् = आ + क्तवतुः ।

वाच्यान्तरम्—रामेण राज्यं पुनः आप्तम् ।

सारार्थः—सर्वैं मित्रगणैः संयुतो रामो भरतादिभिर्मिलित्वा, मुनिवेषं विहाय, राजार्हं रूपं विधाय, सीतां च समीपमुपवेश्य, ततो राज्यं गृहीतवान् इति लङ्काकाण्डकथाबीजम् ।

भाषाऽर्थः—नन्दिग्राम में जटा आदि मुनिवेष को हटा कर, भाइयों से मिलकर, महाराज के ऐसे अपना स्वरूप वनाकर सीता के सहित राम जी राज्य ग्रहण किये ॥८९॥

## अथोत्तरकाण्डकथारम्भः ।

**प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।**
**निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥९०॥**
**न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ।**
**नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः॥९१॥**

अन्वयः—प्रहृष्टमुदितः, तुष्टः, पुष्टः, सुधार्मिकः, निरामयः, अरोगः, दुर्भिक्षभयवर्जितः, च लोक आसीत्, केचित् पुरुषाः क्वचित् पुत्रमरणं न द्रक्ष्यन्ति, नार्यः च अविधवाः, नित्यं पतिव्रताः ( आसन् ) ।

व्याख्या—(रामे राज्यं शासति सति) प्रहृष्टः = प्रमुदितः, मुदितः = सर्वविधसुखसम्पत्समन्वितः, तुष्टः = सन्तुष्टः, पूर्णसकलाभिलाषः इति शेषः, पुष्टः = कार्श्यरहितः, सुधार्मिकः = परमधर्मशीलः, निरामयः = मानसव्यथारहितः, अरोगः = रोगहीनः । दुर्भिक्षभयवर्जितः = सदा सुभिक्षशाली, च = चौरभयवर्जितः, एवंभूतः—लोकः = प्रजागणः, तदानीमासीत् ।

अथ च, केचित् = के अपि, पुरुषाः = जनाः, क्वचित् = कुत्रापि प्रदेशे, पुत्रमरणं = सुतनिधनम्, पुत्रशोकमितिभावः, न द्रक्ष्यन्ति, पितरि जीवति न पुत्रमरणमभूत्तदानी मिति भावः । तथा च नार्यः = स्त्रियः, नित्यं = सदा, अविधवाः = सधवाः, सौभाग्यवत्य एव, तथा च नित्यं = सर्वदा, पतिव्रताः = सतीत्वयुक्ता भविष्यन्ति, "अत्र दशरथमरणेनापि कौशल्यादयो राममातरः, योग्यपुत्रवत्तया वृद्धतया च न विधवा इति शेषः । धन्योऽसौ समयः, यस्मिन्नीदशी व्यवस्थाऽऽसीत् ।

समासः—प्रकर्षेण हृष्टः प्रहृष्टः प्रहृष्टश्चासौ मुदितश्च प्रहृष्टमुदितः । निर्गत आमयो यस्मात् स निरामयः । न रोग अरोगः । दुर्भिक्षस्य अन्नाभावस्य भयः, दुर्भिक्षभयस्तेन वर्जित इति दुर्भिक्षभयवर्जितः । न विधवा अविधवाः ।

व्याकरणम्—प्रहृष्टः = प्र + हृष् + क्तः । मुदितः = मुद् + क्तः । तुष्टः = तुष् + क्तः । पुष्टः = पुष् + क्तः । द्रक्ष्यन्ति = दृश् + लृट् । भविष्यन्ति = भू + लृट् ।

वाच्यान्तरम्—कैश्चित्पुरुषैः पुत्रमरणं न दृश्यते । अविधवाभिर्नारीभि र्भविष्यते ।

कोपः—हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीत इत्यमरः ।
लोकस्तु भुवने जने इत्यमरः ।
दुर्भिक्षमन्नाल्पत्वं चेति कोषः । सती साध्वी पतिव्रतेत्यमरः ।

सारार्थः—रामेऽयोध्यायां राज्यं प्रशासति, सर्वे जनाः हृष्टाः पुष्टाः धार्मिका आधिव्याधिवर्जिताः आसन्, तदानीं दुर्भिक्षस्य चर्चाऽपि न कुत्रापि, तथा च जीवति पितरि पुत्रो यमसदनं नागच्छत् । सर्वाः स्त्रियः सौभाग्यवत्यः पतिव्रताश्चासन्निति ।

भाषाऽर्थः—जब रामजी राज्य कर रहे थे; उस समय, लोग हृष्ट, पुष्ट, सन्तुष्ट, धर्मात्मा, मानसिक, शारीरिक पीड़ा से रहित होते थे, और कहीं भी दुर्भिक्ष का नाम निशान तक नहीं था, और पिता के रहते पुत्र नहीं मरता था । कोई भी स्त्री विधवा नहीं होती थी । और सब पतिव्रता थी ॥६०॥६१॥

**न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।**
**न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥६२॥**
**न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।** 1954 Paper
**नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥६३॥** २ (९)
**नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ।**

अन्वयः—( तदानीम् ) तत्र किंचित् अग्निजं भयं न, च, जन्तवः अप्सु न मज्जन्ति । किंचित् वातजं भयं न, तथा ज्वरकृतं अपि किंचित् ( भयं ) न, क्षुद्भयं ( च अपि ) न, तथा तस्करभयं न, आसीत् । नगराणि, राष्ट्राणि च धनधान्ययुतानि च आसन् । यथा कृतयुगे, तथा नित्यं सर्वे प्रमुदिता आसन् ।

व्याख्या—( तत्र = रामराज्ये ) किंचित् = अल्पमपि, अग्निजं = अग्निहेतुकं, भयं = भीतिः, न = नहि, आसीदिति सर्वत्र योज्यम् । जन्तवः = प्राणिमात्राः, अप्सु = जलेषु, सरोवरतटाकादावित्यर्थः, न मज्जन्ति = अर्थात् नहि केषांचिज्जलनिमज्जनेन मरणं जायते, इति भावः । किंचित् = स्वल्पमपि, वातजं = वायुजनितं, भयम्, प्रकम्पनझञ्झावा-

तादिना भवनप्रासादपतनेनापि नहि केषांचिन्मरणमभवदितिभावः। वा वायुजं = शरीरे कुब्जत्वादिकम्, वा उदरपीड़ादिकं, नाभवत्। तथाच, ज्वरकृतं = ज्वरतापादिकम्, किंचिदपि भयं न, तथा क्षुद्भयम् क्षुधाजनितं चापि भयं, न, तथा तस्करभयं = चौरभयं, न तदाऽभवदिति। एवं च नगराणि = पुराणि, राष्ट्राणि = राजस्थानानि, धनधान्ययुतानि, एव आसन्। न कुत्रापि धनधान्यवैकल्यमभवत। यथा = यद्वत्, कृतयुगे = सत्ययुगे, सर्वे जनाः प्रमोदयुक्ता आसन्, तथैव = तद्वदेव, तदानीम् रामे राज्यं शासति। सर्वे जन्तवः, प्रमुदिताः = हर्षिताः, अभवन्निति।

समासः—अग्नेर्जायमानमग्निजम्। वाताज्जनितं = वातजम्। ज्वरेण कृतं ज्वरकृतम्। क्षुतः क्षुधायाः भयं क्षुद्भयम्। तस्कराद्भयं = तस्करभयम्। धनानि च धान्यानि चेति धनधान्यानि, तैर्युतानि इति धनधान्ययुतानि।

व्याकरणम्—मज्जन्ति = मस्ज् + लट्। प्रमुदिताः = प्र + मुद् + क्तः। अत्राऽऽसन्निति क्रियाध्याहारः।

वाच्यान्तरम्—सर्वैः प्रमुदितैः आस्यत।

कोषः—आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलमित्यमरः।
नभस्वद्वातपवनपवमानप्रभञ्जना इत्यमरः।
अशनाया बुभुक्षा क्षुदित्यमरः।
चौरैकागारिकस्तेनदस्युतस्करमोषका इत्यमरः।

सारार्थः—रामे राज्यं कुर्वति, कुतोऽपि भयं नासीत्, नहि केषांचिदकालमरणं समभवत्। न कुत्राप्यन्नवैकल्यम्। सत्ययुगे यथा प्रजाः सानन्दा स्तथैव तदानीं मुदिता आसन्निति।

भाषाऽर्थः—जब राम जी राज्य करते थे, उस वक्त, अग्नि से किसी को भय नहीं हुआ, कोई भी पानी में डूब कर न मरा, न वायु के सबब ही से किसी को चोट पहुँची, न तो बुखार ही किसी को सताया। न तो भूख के मारे कोई मरे, कहीं भी चोरी नहीं होती थी, देहात शहर सब जगह धन धान्य से भरी थी। जैसे सत्ययुग में लोग खुश थे, वैसे ही उस वक्त भी थे ॥९२॥९३॥

इष्ट्वा अश्वमेधशतैरि तथा बहुसुवर्णकैः ॥९४॥

गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् ।
असंख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः ॥९५॥

अन्वयः—महायशाः, अश्वमेधशतैः, इष्ट्वा, तथा बहुसुवर्णकैः च ( इष्ट्वा ) विद्वद्भ्यः, विधिपूर्वकं गवां कोट्ययुतं दत्वा, ब्राह्मणेभ्यः, असंख्येयं धनं दत्वा ( शुशुभे )

व्याख्या—महायशाः = अतुलकीर्तिः, अश्वमेधशतैः = शतसंख्यकाश्वमेधयज्ञैः, इष्ट्वा = यज्ञं कृत्वा, तथा = अपिच, बहुसुवर्णकैः = तन्नामकयागैः, वा अपरिमितकाञ्चनैः च इष्ट्वा, विद्वद्भ्यः = पण्डितेभ्यः, गोमहत्त्वज्ञेभ्य इत्यर्थः, विधिपूर्वकम् = यथाविधि, ( स्वर्णशृङ्गीं रौप्यखुरां मुक्तादामविभूषिताम् । पृष्ठास्तरणसंयुक्तां दद्याद्गां कांस्यदोहनाम् । ) इत्युक्तविधिना; गवाम् = सवत्सगवीनां, कोट्ययुतं = १०००००००००० एतन्मितम् दत्वा = समर्प्य, ब्राह्मणेभ्यः = दैन्यपात्रत्वयुक्तेभ्यो विप्रेभ्यः, असंख्येयं = अपरिगणनीयम् , धनं = वित्तं, च दत्वा राज्यमकुर्वत् इति शेषः ।

समासः—अश्वस्य मेधो हिंसा येषु तेऽश्वमेधाः । तेषां शतानि तैरश्वमेधशतैः । बहूनि सुवर्णकानि दीयन्ते येषु तैः बहुसुवर्णकैः ।

व्याकरणम्—इष्ट्वा = इष् + क्त्वा । दत्वा = दा + क्त्वा । अस्य श्लोकस्योत्तरेण सम्बन्धान्न वाच्यान्तरमत्र । किन्तु तेनैव सहेति बोध्यम् ।

कोषः—विद्वान् विपश्चिद्दोषज्ञ इत्यमरः । विधिर्विधाने दैवे चेतिविश्वः ।

सारार्थः—शतवारमश्वमेधयज्ञं, बहुसुवर्णदानप्रधानं यज्ञं च कृत्वा गोसेवनादरवद्भ्यो द्विजेभ्यो गवामेकं निखर्वं दत्वा, तथा च ब्राह्मणेभ्यः, अगणनीयं धनं च दत्वा देशे शान्तिः स्थापिता ।

भाषार्थः—सौ बार अश्वमेध यज्ञ करके बहुत सुवर्ण नाम के यज्ञ को भी करके, पण्डितों को एक निखर्व १००००००००० गाय विधि पूर्वक देकर, आगे देश देशों में राजवंशों का स्थापन किये ॥९४॥९५॥

राजवंशान् शतगुणान् स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ॥९६॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥९७॥

अन्वयः—राघवः, शतगुणान्, राजवंशान्, स्थापयिष्यति। रामः, अस्मिन् = लोके, चातुर्वर्ण्यं स्वे स्वे धर्मे नियोक्ष्यति। तथा च दशवर्षसहस्राणि दशवर्षशतानि, च राज्यम्, उपासित्वा ब्रह्मलोकं प्रयास्यति।

व्याख्या—राघवः = रघुवंशीयः, राम इत्यर्थः, शतगुणान् = अनेकान्, राजवंशान् = भूपकुलानि, स्थापयिष्यति = रक्षिष्यति, तथाच—रामः, अस्मिन् = मर्त्यसंज्ञे, लोके = भुवने, मर्त्यभुवने इत्यर्थः, चातुर्वर्ण्यं = चतुर्वर्णान् = ब्राह्मणक्षत्रियवैश्यशूद्रानित्यर्थः। स्वे स्वे = निजे, निजे, धर्मे = वर्णाश्रमधर्मे इत्यर्थः, नियोक्ष्यति = प्रवर्त्तयिष्यति। अर्थात् रामे राज्यं शासति, नहि केऽपि वर्णा भिन्नवर्णधर्मनिरताः आसन्निति। तथा च दशवर्षसहस्राणि = दशसंख्यकसहस्राणि, दशवर्षशतानि = एकसहस्रवर्षाणि, एतदुभययोगेन एकादशसहस्रसंख्यकवर्षाणीत्यर्थः। राज्यं = प्रजापालनविधानभारम्; उपासित्वा = उपास्य = परिपाल्येत्यर्थः। ब्रह्मलोकं = वैकुण्ठं, यास्यति = गमिष्यति।, देवीभागवतेऽपि—"एकादशसहस्राणि वर्षाणि पृथिवीतले। कृत्वा राज्यं"......३ स्क ३० अ०।

समासः—राज्ञां वंशा राजवंशास्तान् राजवंशान्। चत्वारो वर्णाश्चतुर्वर्णास्त एव चातुर्वर्ण्यम्। स्वार्थे ष्यञ्।

व्याकरणम्—स्थापयिष्यति = स्था + लृट्। नियोक्ष्यति = नि + युज + लृट्। उपासित्वा = उप + आस् + क्त्वा। प्रयास्यति = प्र + या + लृट्।

वाच्यान्तरम्—शताश्वमेधादि कृतवता रामेण लोके चातुर्वर्ण्यं (चत्वारो वर्णाः) स्वधर्मे नियोक्ष्यते (नियोक्ष्यन्ते) रामेण ब्रह्मलोकं प्रयास्यते।

कोषः—लोकस्तु भुवने जने इत्यमरः।

सारार्थः—रामेणानेक राजवंशाः स्थापितास्तथाच रामे राज्यं प्रशासति, सर्वे वर्णाः स्वस्ववर्णधर्मे निरताः आसन्, केऽपि न भिन्नधर्मावलम्बिनस्तदानीम्। तथा च रामराज्यसमय एकादशसहस्रवर्षसंख्यक इति।

भाषार्थः—राम जी अनेक (अन गिन) राजवंशों को स्थिर किये, और इस मर्त्यलोक में ब्राह्मणों का, अध्ययन, अध्यापन, यजन, याजन,

दान, प्रतिग्रह, इन धर्म में, क्षत्रियों को प्रजापालन, गोब्राह्मणरक्षण में, वैश्यों को वाणिज्य, पशुपालन, कृषिकार्य में शूद्रों को ब्राह्मण सेवा आदि में लगावेंगे ( लगाये ), और ११ एगारह हजारवर्ष तक राज्य करके बाद ब्रह्मलोक पधारेंगे ( पधारे ) ॥९६॥९७॥

इदं पवित्रं, पापघ्नं, पुण्यं, वेदैश्च सम्मितम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥९८॥

अन्वयः—यः पवित्रं, पापघ्नं, पुण्यं, वेदैः, च सम्मितम्, इदम्, रामचरितम्, पठेत्; स सर्वपापैः प्रमुच्यते ।

व्याख्या—यः = कश्चित्, पवित्रम् = चित्तशोधकम्, पापघ्नम् = सकलकल्मषहरम्, पुण्यम् = निखिलपुण्यसाधकम्, वेदैः = ऋक्-यजुःसामाथर्वसंज्ञकैः, समम् = तुल्यम्, वेदाध्ययनवदस्याप्यध्ययने फलमित्यर्थः, ईदृशमिदम् = अधुनोक्तम्, रामचरितम्, = संक्षिप्तरामायणं, पठेत् = अभ्यसेत्, स; सर्वपापैः = निःशेषदुरितैः, प्रमुच्यते = संत्यज्यते । सर्वेभ्यः पापेभ्यो विनिर्मुक्तो भवतीत्यर्थः ।

समासः—पापानि हन्तीति पापघ्नस्तं पापघ्नम्, रामस्य चरितं, रामचरितम् । सर्वाणि पापानि सर्वपापानि तैः सर्वपापैः ।

व्याकरणम्—पठेत् = पठ + विधि + लिङ् । प्रमुच्यते = प्र + मुच् + कर्मणि लट् ।

वाच्यान्तरम्—येन रामचरितं पठ्यते, सर्वपापानि तं प्रमुञ्चन्ति ।

सारार्थः—य इदं वेदापमं मूलरामायणं प्रत्यहं पठेत्तस्य त्रिविधपापनाशपूर्वकं सर्वविधपुण्यसंचया भवेत् ।

भावार्थः—यो कोई परम पवित्र, पापहरण, पुण्यप्रद, वेद के समान, ऐसे संक्षिप्त राम चरित ( याने मूलरामायण ) को पढ़ेगा, उसको सब पापों से छुटकारा होगा ॥९८॥

एतदाख्यानमायुष्यं पठन् रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥९९॥

अन्वयः—एतत् आयुष्यं, आख्यानं, रामायणं पठन्, नरः, सपुत्रपौत्रः, सगणः, प्रेत्य स्वर्गे महीयते ।

व्याख्या—एतत् = अधुनोक्तं, आयुष्यम् = आयुर्वर्धकम्, रामायणम् = रामचरितम्, आख्यानम् = कथानकम्, पठन् = अभ्यसन्

नरः = मनुष्यः, सपुत्रपौत्रः = पुत्रपौत्राभ्यां सहितो भूत्वाऽन्ते सगणः = सपरिवारः, एकदैव नहि भूलोके कुलशेषः, किन्तु यथा यथा यदा यदा तत्कुलजो म्रियते, तदा इति, प्रेत्य = पूर्वदेहं त्यक्त्वा स्वर्गे = देवलोके, महीयते = पूज्यते ।

समासः—पुत्रस्यापत्यं पुमान् पौत्रः, पुत्राश्च पौत्राश्च पुत्रपौत्राः, तैः सह वर्तते यः स सपुत्रपौत्रः ।

व्याकरणम्—पठन् = पठ + शतृ । प्रेत्य = प्र + इण् + ल्यप् । महीयते = महीङ् + कण्ड्वादित्वात् यक् + लट् ।

वाच्यान्तरम्—रामायणं पठन्तं नरं स्वर्गे देवाः पूजयन्ति, कर्तरि वाच्ये ।

कोषः—आख्यानं तु कथानकमिति शब्दार्णवः ।

सारार्थः—इदं रामायणं यः पठिष्यति, स इह चिरजीवी, पुत्रपौत्रैः संयुतो भूत्वाऽन्ते स्वर्गञ्च गमिष्यतीति ।

भाषाऽर्थः—जो कोई, आयु को बढ़ाने वाले इस रामायण कथा को पढ़ता है, वह इस दुनियां में पुत्र पौत्र से सहित होकर, पीछे दल व दल स्वर्ग में जाकर सत्कार पाता है ॥९९॥

पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्त्वमीयात् ॥१००॥

अन्वयः—( एतत् रामायणं ) पठन् द्विजः वागृषभत्वम्, ईयात्, स्यात् क्षत्रियः, भूमिपतित्वम्, ईयात् । वणिग् जनः, पण्यफलत्वम्, ईयात्, शूद्रः जनः अपि महत्त्वम् ईयात् ।

व्याख्या—'एतत् रामायणमाख्यानकम्'-इति पूर्वपद्यादानेतव्यम् । पठन् = अधीयानः, द्विजः = ब्राह्मणः, वागृषभत्वम् = वाक्पतित्वम् = वचनरचनपटुप्रधानत्वं वेति, ईयात् = प्राप्नुयात्, ब्राह्मणस्य सर्वं प्राप्यं वाचैव प्राप्तं भवतीति । स्यात् = यदि, ( अत्र 'स्यात्' इत्यस्य 'यद्यर्थे' केऽव्यये प्रयोगः । ) क्षत्रियः पठेत्, तर्हि भूमिपतित्वम् = राजत्वम्, ईयात् = प्राप्नुयात् । यतो हि क्षत्रियस्य राजत्वमेव सर्वेभ्य इष्टं वस्तु इह संसारेऽस्ति तेन युक्तमुक्तमित्यपि । वणिग् = वैश्यः, व्यापारवि-

धाता, जनः = लोकः, पण्यफलत्वं = क्रयविक्रयलाभरूपम्, प्राप्नुयात्, यतो वैश्यस्य 'व्यापारे लाभो भवत्वि'-तोऽधिकमैहिकमिच्छितं न किमप्यस्ति, अत इदमपि महत्सुष्ठु वर्त्तते । शूद्रः = चतुर्थो वर्णस्तु, महत्त्वम् = स्वजातिमान्यत्वम्, प्राप्नुयात् = लभेत् ।

अर्थादुक्तसंक्षिप्तरामायणे, चातुर्वर्ण्याचारशिक्षोपदेशो वर्त्तते । अतः सर्वे वर्णाः स्वस्ववर्णानुकूलशिक्षां कथं न प्राप्स्यन्ति ?, तथा योऽलसः स हनुमतोऽनिर्वचनीयमुद्योगं विज्ञाय शिक्षाधिया स्वीकुर्यात्तदा कथं नासौ दुःसाध्यमपि सुसाध्यं करिष्यति ?, योऽव्यवस्थितचित्तः शिक्षाधिया इदं पठित्वा हृदये रक्षेत्तस्य, रामस्य स्वार्थत्यागपूर्वकं नियमदृढत्वम्, भरतस्य चालौकिकं राज्यत्यागत्वं विलोक्य कथं न परार्थबुद्धिर्व्यवस्थितचित्तोऽपि भवेत् ? । यः सकलशास्त्रपारंगमोऽपि नीचकर्मनिरतो भवेत्, सच कथं न रावणवत्सगणो नंक्ष्यति, उद्योगी जनो नलस्य समुद्रबन्धनमिव किं दुःसाध्यं न कुर्यात् ? । बलिष्ठोऽपि प्रमादी जनः कथं न बालिरिव नश्येत् ? रामस्य वानराणामिव, लघूनामपि साहाय्यं कार्यसाधकमेव भवतीति । रामसुग्रीवयोरिवैकविषयलक्ष्यवतोर्मैत्री जायते । हनुमच्चरितं हृदये विधाय कथं न स्वामिभक्तो भवेत् ? ।

तथा च ब्राह्मणः, 'तपःस्वाध्यायनिरतम्' इत्यादि महदनुष्ठानलब्धालौकिककवित्वप्रतिभं वाल्मीकिं विचिन्त्य विश्वामित्रस्याद्भुतयोगबलं, भरद्वाजवसिष्ठप्रभृतिमहर्षिचरितं च संधार्य कथं न तल्लिक्षणानुकरणतया वागृषभत्वं लभेत् ?, अवश्यमेव प्राप्नुयात्तत् ।

एवं दशरथस्य धर्मैकनिष्ठतां, जनकस्य दृढप्रतिज्ञताम्, रामस्य स्वार्थशून्यताम्, भरतस्यातुलोदारताम्, रावणस्य राजनीतिं, इत्यादि मनसि विभाव्य कथं न क्षत्रियो ज्ञातराजनीतिर्भूत्वा भूपतित्वं लभेत् ? ।

एवमेव क्षीणोऽपि वैश्यः, हनूमत उद्योगं साहसं च विचिन्त्य नियतं समुद्रपरपारपर्यन्तमपि व्यापारं कुर्वन् पण्यफलमपूर्वं कथं न लभेत् ? ।

एवञ्च शूद्रोऽपि हनूमद्विभीषणादीनां शबर्याश्च स्वामिसेवानियमेनाद्भुतप्रतिष्ठालाभं ज्ञात्वा, कथं न सेवायामादरं कृत्वा महत्संसर्गान्महत्त्वं लभेदिति ? ।

अत्र चातुर्वर्ण्यस्य स्वस्वाभिलषितातुलमहत्त्वलाभोपदेशदर्शनाद्स्य रामायणस्याध्ययनं श्रवणं मननञ्च परमावश्यकं प्रदर्शितम्। सावधानधिया एतत् पठतः सर्वो दुर्गुणोऽपसर्पति। सकला गुणाश्च स्वयं तत्र स्थातुमायान्ति। अतः सर्वैर्हिताभिलाषिभिर्जनैः पठनीयमेवैतच्चरितमितिभावः।

सकलविद्याबलबुद्धिधनविक्रमशालिनमपि रावणं तृणवन्मत्वा, तापसं राज्यच्युतमपि राममनुरक्ता सीता आसीदिति विचार्य कथं न अकुलीनाऽपि कुलीना भविष्यति?। नीचेन निषादेन रामस्येव, कथं न श्रीमतो जनस्य स्वबान्धवेन साधारणेन सह समानो व्यवहारः कर्त्तुमुचितः?।

समासः—द्वाभ्यां जन्मसंस्काराभ्यां जायते इति द्विजः। वाचि ऋषभः, वागृषभः तस्य भावो वागृषभत्वम्, भूमेः पतिः भूमिपतिस्तस्य भूमिपतेः भावो भूमिपतित्वम्। पण्यस्य फलं पण्यफलम्, तस्य भावः पण्यफलत्वम्।

व्याकरणम्—पठन् = पठ + शतृ। ईयात् = इण् + आशीर्लिङ्।

वाच्यान्तरम्—पठता द्विजेन वागृषभत्वम् ईयेत। स्यादिति यद्यर्थेऽव्ययम्। क्षत्रियेण भूमिपतित्वमीयेत। वणिग्जनेन पण्यफलत्वमीयेत। शूद्रेणापि महत्त्वम् ईयेत।

कोषः—स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा इत्यमरः।
समज्या परिषद्गोष्ठी सभा समितिसंसदः इत्यमरः।
व्याहार उक्तिर्लपितं भाषितं वचनं वच इत्यमरः।

सारार्थः—यः कश्चिदिदं संक्षिप्तरामायणं पठेत् स स्वस्वाभीष्टं लभते।

भाषार्थः—जो ब्राह्मण इसको पढ़ेगा, वह बृहस्पति के समान होगा, जो क्षत्रिय इसको पढ़ेगा, वह राजा होगा, जो वैश्य पढ़ेगा, वह अपने व्यापार में सदा लाभ उठावेगा। जो शूद्र पढ़ेगा, वह बड़ेपन को पहुँचेगा॥ १००॥

इति श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे प्रथमः सर्गः।

इति मूलरामायणं समाप्तम्।

# अथ रामायणपाठेन शिक्षाग्रहणम् ।

(१) ब्राह्मणसेवया यज्ञाचरणेन चेह जगति न किमपि दुर्लभं वस्तु विद्यते, यथा जरातुरस्य दशरथस्य तत्प्रभावादेव ईश्वरांशाश्चत्वारस्तनयाः संबभूवुः ।

(२) अवश्यं दुःखानन्तरं सुखं, सुखानन्तरञ्च दुःखं जायते जन्तूनाम् । अतः सुखदुःखयोरवसरे स्थिरचित्तेन भवितव्यम् ।

(३) यस्य हेतवे येषां निश्चलः संकल्पः, स च तेषामवश्यं मिलत्येव । यथा दशरथस्य पुत्राप्तिः, जनकस्य हरधनुर्भङ्गकरणपूर्वकं वरलाभश्चेति ।

(४) सतां सङ्गत्या जनस्य किं किं नापूर्वं गुणरत्नं सिद्ध्यति ? यथा विश्वामित्रसहवासाद्रामलक्ष्मणयोः दानवहननेनालौकिकं यशः, दिव्यास्त्रलाभः, याज्ञवल्क्यशतानन्दजनकादिभिः परिचयः, त्रैलोक्यरत्नरूपयाऽवर्णनीयरूपसद्गुणया सीतया सह विवाह इत्यादि सञ्जातम् ।

(५) गृहे निवसतुर्गुणगौरवपरिचयो जनानां विशेषतया न जायते, तेन स्वगुणोत्कर्षप्रकाशाय देशभ्रमणं कर्त्तव्यं, तदा तद्गुणानां सर्वत्र गन्धः प्रसरति । यथा रामस्य विश्वामित्रेण सह भ्रमितस्यैव मारीचादिनिराकरणेन, जनकयज्ञे धनुर्भङ्गेन च लोकोत्तरं यशः प्रसरितम् ।

(६) सर्वेषु शुभकार्येषु विघ्नानि वर्त्तन्ते एव, तत्र ये धीरास्तेषां पुरतस्तानि विलीयन्ते स्वयम् । ये चाधीरास्तानेव तानि बाधन्ते । यथा विवाहसमये रामं प्रति परशुरामस्य तर्जनादिकम् ।

(७) दुर्जनसंसर्गो न कर्त्तव्यः, तेन साधोरपि मनो वैकृत्यमुपैति, यथाऽतीव सज्जनायाः कैकेय्या मन्थरासङ्गात् । अतो दुर्जनाद्दूरमेव स्थातव्यं सर्वैः साधुभिः ।

(८) स्त्रीणां विश्वासः कदापि नो विधेयः, न च तस्यै हृदयं दद्यात्, अन्यथा प्राणहानिशङ्का जायते, यथा दशरथस्य प्राणनाशोऽभूत् ।

(९) यः किल राजसिंहासनारूढप्रायस्य, तत्क्षणे पितुर्वनगमनाज्ञयाऽरण्यं प्रस्थितस्य रामस्य प्रसङ्गोपाख्यानं, पठिष्यति, स कथं न पितुर्मातुराज्ञापालनं करिष्यति ? ।

(१०) यः स्वार्थं मुञ्चति, तस्यैव स्वार्थसिद्धिर्भवति, यः स्वार्थाय परार्थबाधामाचरति, तस्य प्रत्युत स्वार्थहानिर्जायते। यथा रामः प्राप्तमपि राज्यं भरतस्यार्थे त्यक्तवान्, तथापि चतुर्दशवर्षाणि वनवासिनां शासकः, तदूर्ध्वं पुनरयोध्यायामपि राजसिंहासनं लब्धवानेव। अथ कैकेयी तु स्वपुत्रार्थं रामस्य राज्याभिषेके विघ्नं कृतवती, तेन तु नहि भरतः सुखी, अपितु स्वयं विधवाऽनाथा च जाता।

(११) या वनिता वनं प्रस्थितेन रामेण सहानुव्रजन्त्याः जानक्याः कथानकं स्मरिष्यति, सा कथं न पतिव्रता, पतिप्राणा च भविष्यति?

(१२) यो वनवासिनां सीतारामलक्ष्मणानां चरितं पठिष्यति स सदा सर्वस्यामवस्थायां प्रसन्नः स्थास्यति।

(१३) सर्वत्र द्वित्रचत्वारः सखायः, शत्रवश्च तिष्ठन्त्येव, नहि केवलं सर्वे शत्रवः, नहि केवलं मित्राणि च संजायन्ते। यथा रामस्य दशस्यापि वने कियन्तः शत्रवः।

(१४) संकटेऽपरिचितप्रदेशे च वृद्धस्य प्रसिद्धस्य संगत्योपदेशो ग्राह्यः। यथा रामो भरद्वाजाश्रमं गत्वा तस्मात् वनस्य सर्वं रहस्यं ज्ञातवान्।

(१५) स्त्री एव कलहस्य, सर्वापदोऽपि मूलम्। यदि शूर्पणखा रामायणे पात्रं न स्यात्, तदा रामरावणयोः लौकिकदृष्ट्या प्रायोविरोधो न भवेत्।

(१६) अतिरूपया कन्यकया विवाहोऽनर्थमूलक एव। यथा रामः सीताया अलौकिकरूपसंपदा रावणेन हृतायाः कारणेन महान् खिन्नो जातः।

(१७) स्वगृहे चेत्साधारणमपि वस्त्रं भाण्डं वर्त्तते, तदा तेनैव निर्वाहः कार्यः। नहि विशेषं किमपि वस्तु विलोक्य मनो मोक्तव्यम्, अन्यथा महती हानिर्भवति। यथा काञ्चनमृगमवलोक्य रामस्य सीताहरणं जातम्।

(१८) अनाथाऽबलारक्षणार्थं प्राणस्याप्युत्सर्गः कर्त्तव्य एव, यथा जटायुना सीतार्थे कृतम्।

(१९) प्रत्यक्षे शङ्कितोऽपि नीचः शत्रुः, परोक्षेऽपि हानिं करोत्येव। यथा रावणो रामस्य सीताहरणम्।

(२०) नीचजातिकृतोऽपि सत्कारः स्वीकर्त्तव्य एव, यथा रामः शबर्याः सत्कारं सहर्षमङ्गीकृतवान् ।

(२१) विपत्तौ निश्चयमीश्वरो नानारूपेण साहाय्यं करोति, अतो विपदि धैर्यावलम्बनं युक्तम् । यथा रामस्य सीताहरणदशायां हनूमत्सुग्रीवप्रभृतयः सहायकाः ।

(२२) सच्चरित्र एव जनो यदि मध्यस्थस्तदोदासीनावपि संमेलयति, मध्यस्थोऽसच्चरित्रस्तु संमिलितावपि विघटयत्येव । यथा हनुमान् रामसुग्रीवयोः संयोजकः । शूर्पणखा तु रामरावणयोर्विरोधवर्धकी ।

(२३) तुल्यलक्ष्यवतोर्वास्तवं प्रेम भवति, भिन्नभिन्नलक्ष्ययोस्तु प्रेम क्षणिकमेव । यथा स्त्रीविच्छेदार्त्तयोः रामसुग्रीवयोर्मैत्री । भिन्नलक्ष्यवतो रामवालिनोर्वैरम् ।

(२४) येन मैत्रीमिच्छेत्तस्यादावेवोपकारमाचरेत्, तदा पश्चात्स्वस्यापि इष्टसिद्धिर्जायते । यथा रामेण पूर्वं सुग्रीवस्य शत्रुर्बाली हतः ।

(२५) स्नेहो दुःखस्य कारणम्, रामस्य हेतुना सीता, तथा सीतायाः कारणेन रामः । मिथ एतौ वियोगेन खिन्नौ ।

(२६) उद्योगे कृते किं न सिद्ध्यति? यथा द्वीपान्तरप्राप्ताऽपि सीता कपिना हनुमताऽऽसादिता ।

(२७) एकोऽपि चेद्गुणी बुद्धिमाँश्च जनः कुले भवेत्तदा सर्वे तत्प्रभावादेव प्रचलन्ति । यथा हनूमतः प्रभावादन्येऽपि कपयः । अथवा नलस्योद्योगेन सर्वे समुद्रमुत्तीर्णाः ।

(२८) नहि केनापि सह विरोधः कर्त्तव्यः, येन केनापि मित्रता रक्षणीया, सा समये सुखदैव भवति । यथा रामस्य वानरैरुपकारोजातः ।

(२९) यावद्दर्पान्धा न दर्पान्धदृष्ट्या दृश्यन्ते, तावत्तेषां प्राकृतिकं ज्ञानं, तथा च परगुणावगमयोग्यबोधो न उत्पद्यते । यथा रामस्य कोपात्समुद्रस्य विनयः ।

(३०) प्रभोराज्ञां विनाऽपि तद्विरोधिनोऽनिष्टचिन्तनं कार्यम् । तथा च प्रभोराज्ञयाऽपि सहसा तस्य हानिर्न कार्या । तथा च प्रभोराज्ञां विनाऽपि प्रभोरुपकारः कर्त्तव्यः । यथा हनूमान् रामाज्ञां विनैव लङ्कां ददाह ।

(३१) येन विरोध उत्पद्यते, तत्पक्षीयस्तेन विरुद्ध्य चेदागच्छेत्, तदा तं यत्नेन मेलयेत्; तथा महानुपकारो भवति। यथा रामस्य विभीषणद्वाराऽसाध्यसिद्धिः।

(३२) कुदेशेऽपि साधवः, सुदेशेऽपि असाधवो वर्त्तन्ते एव। यथा लङ्कायां विभीषणः। मुनीनां वसतावपि दानवाः।

(३३) परदाराहरणसममन्यद्वंशध्वंसकरं कर्म न विद्यते, यथा रावणः सीतामपहृत्य सवंशो यमस्यातिथिर्बभूव।

(३४) सद्वंशजातः सकलविद्यानिष्णातोऽपि जनः कुसंगत्याऽसद्व्यसनेन च निन्द्यो भवति, यथा रावणः।

(३५) कालवशीभूतेन बान्धवादेः पथ्यं वचनं गरलमिवानुभूयते, अकल्याणमेव येन भवति, तदेवामृतमिव बुध्यते। यथा रावणस्य विभीषणमन्दोदरीप्रभृतीनां वचनं हितमप्यहितमिव।

(३६) नीचकर्मणा नियतं कस्मिन्नपि समये सर्वेश्वरस्यापि सर्वनाशो भवत्येव। यथा रावणस्य।

(३७) दृढप्रतिज्ञस्य सर्वमीप्सितमीश्वरः स्वयं साधयति। यथा रामस्य।

एवमनेकाः शिक्षा निःसरन्ति रामायणात् किमधिकलेखेनेति।

इति संक्षेपतो रामायणपाठेन शिक्षालाभः।

इति रामायणप्रकरणम्।



# अथ महाभारतीयशीलनिरूपणाध्यायस्य पात्रपरिचयः ।

देवव्रतो वा भीष्मः—अस्य माता गङ्गा, पिता महाराजः शन्तनुरासीदयमतीव दृढप्रतिज्ञोऽक्षुण्णब्रह्मचर्यो धनुर्धराणामाचार्यः, कौरवाणां पाण्डवानां च पितामहभ्राताऽद्भुतविक्रमवान् । अनेनैव समरे श्रीकृष्णस्यापि प्रतिज्ञा ( नाहं महाभारते शस्त्रं धारयिष्यामीति रूपा ) खण्डिता । महाभारते सर्वत्र पितामह इति संज्ञया प्रयुज्यते ।

धृतराष्ट्रः—अयमम्बिकायां व्यासेनोत्पादितो गोलकः पुत्रः । गर्भाधानसमये लज्जया यतोऽम्बिका नयने निमील्य व्यासान्तिकं गताऽत एव तत्पुत्रोऽसौ जन्मान्धः संजातः ।

पाण्डुः—अयं धृतराष्ट्रानुजोऽतीव सुन्दरो वीरश्च पाण्डुरोगाक्रान्तोपिऽज्येष्ठस्य*जन्मान्धत्वाल्लघुरपि राज्ये नियुक्तः सर्वैः ।

युधिष्ठिरः—अयं पाण्डोः प्रथमस्तनयोऽतीव धर्मवान् । अस्य त्रयोऽनुजाः भीमार्जुननकुलसहदेवाभिधाना आसन् । तत्र नकुलसहदेवौ माद्रीसुतौ । इतरे च त्रयो युधिष्ठिराद्याः कुन्तीपुत्राः । एषामेकैव पत्नी द्रौपदी परमपतिव्रताऽऽसीत् ।

कुन्ती—इयं कुन्तिभोजस्य यादवप्रवरस्यात्मजाऽनूढा एवातिथ्यतोषितस्य दुर्वाससो मन्त्रप्रभावादाहूतेन सूर्येण बलादुपभुक्ता, ततो जायमानं तनयं कर्णनामानं व्यभिचारगोपनाय धात्रीद्वारा निर्जने वने जहौ । पश्चात्पाण्डुना विवाहिता । इयं श्रीकृष्णस्य पितृष्वसाऽत एव तस्य पाण्डवाः पैतृष्वसेया भ्रातरा आसन् ।

माद्री—इयं मद्रदेशा ( मद्रास ) धिपस्य शल्यस्य भगिनी, अवर्णनीयसौन्दर्यशालिनी आसीत् । यदा कुन्त्यां पाण्डोरेकमप्यपत्यं नोत्पन्नं, तदाऽपत्येच्छया तेनास्या विवाहः संवृत्तः । परं चिरादस्यामपि विवाहफलं किमपि न विज्ञायातिखिन्नस्य स्वामिनश्चिन्तादूरीकरणाय कुन्ती मुनिदत्तमन्त्रशक्तिं तस्मै निवेद्य, तदाज्ञया धर्ममाहूय युधिष्ठिरं, वायुमाहूय भीमं, इन्द्रमाहूयार्जुनं जनयामास ।

---

*राज्ये संस्थापितः पाण्डुः कनीयानपि मन्त्रिभिः ।
अन्धत्वाद्धृतराष्ट्रोऽसौ नाधिकारे नियोजितः ॥ दे० भा० ३ स्कं० ६ अ० ।

तथा च माद्र्यपि अनपत्यदुःखतप्ततया पतिं संप्रार्थ्य तदादेशेन कुन्त्याः मन्त्रं गृहीत्वा, तेनाश्विनीकुमारावभिमन्त्र्य नकुलसहदेवावुत्पादयामास।

गान्धारी—इयं गान्धारराजात्मजा धृतराष्ट्रस्य धर्मपत्नी, दुर्योधनादीनां भ्रातृशतानां जनयित्री परमपतिव्रताऽऽसीत्। अनया जन्मान्धवरेण सह स्वविवाहघटनां निशम्यैव पट्टिकया निजनयने पिहिते।

दुर्योधनः – अयं धृतराष्ट्रस्य ज्येष्ठः पुत्रः, कौरवाणां राजा दुष्टचित्तः बाल्यादेव पाण्डवविरोधी, सभायां द्यूतेन पाण्डवं जित्वा, तद्दयितां द्रौपदीं विवस्त्रां कर्त्तुमिच्छत्।

मान्धाता—अयं सूर्यवंशी अयोध्यावासी महाप्रतापी भूपतिरासीत्, अयं स्वपितुः कटिं भित्वा जातः, शतजननीनां पयः पीत्वा ववृधे, अनेन रावणः पराजितः।

नाभागः—भूपतिविशेषः।

नारदः—ब्रह्मणो मानसपुत्रः, सर्वगः सर्वज्ञो ब्रह्मर्षिः, प्रकृत्या कलहप्रिय आसीत्।

इन्द्रः—अयं देवानां राजा महापराक्रमी परोत्कर्षासहिष्णुरासीत्।

प्रह्लादः—हिरण्यकशिपोर्दानवस्य पुत्रः परमविष्णुभक्तः स्वाद्भुतविक्रमेण त्रैलोक्यराज्यमात्मायत्तं कृतवान्। अस्यैव पुत्रो वलिः, यो हि वामनेन विष्णुना वञ्चितः।

शुक्रः—अयं दैत्यानामाचार्यो मन्त्री च देवगुरोर्विरोधी चासीत्।

गुरुः—अयं देवानां गुरुः, बुद्धिमत्सु धुरीणः, समये समये दैत्यप्रयुक्तान् देवक्लेशान् दूरीकर्त्तुं दक्षो 'बृहस्पति'—रिति नाम्ना प्रसिद्ध आसीत्।

विदुरः—अयमम्बालिकादास्यां व्यासेनोत्पादितो गोलकस्तनयो धर्मांशस्वरुपोऽतिनीतिवेत्ता पाण्डोर्लघुभ्राता 'क्षत्ता' आसीत्। अतीव सज्जनः पाण्डवप्रियोऽपि राजाधीनतया दुर्योधनपक्षवर्त्ती एवासीत्। एतद्बुद्धिप्रभावादेव लाक्षागृहाग्नितः पाण्डवा वञ्चिताः। एतत्कृता नीतिः 'विदुरनीति'रिति कथ्यते।

तथा च शीलवृत्तसत्यधर्माद्याः प्रसिद्धाः, नहि व्यक्तिविशेषाः।

इति संक्षेपतः शीलनिरूपणाध्यायस्य पात्रपरिचयः।



## अथ भारतीयशीलनिरूपणाध्यायस्य संक्षिप्तकथानकम् ।

निवृत्ते महाभारतसमरे शरशय्याशयानोभीष्म—'उत्तरायणे त्यक्तजीवितस्य नियतं सद्गतिप्राप्तिर्भवती'ति धियोत्तरायणं प्रतीक्षन् यदाऽऽसीत्तदानीं दुर्लभशिक्षालाभाशया कतिपये युद्धोर्वरिताः पाण्डवप्रभृतयस्तं परिवृत्य स्थिता स्तेषु सर्वमान्यो युधिष्ठिरो नानाविषयकाननेकान्प्रश्नानपृच्छत् । येषु चैकतमस्त्वेतदध्यायरूपोऽस्ति । वर्त्तेऽयमध्यायो महाभारतस्य शान्तिपर्वणि राजधर्मप्रकरणे चतुर्विंशत्यधिकशततमः ( १२४ ) ।

तत्र भीष्मं प्रत्युवाच युधिष्ठिरः—

भो पितामह ! धर्मस्य बहुविधेषु साधनेषु शील ( सच्चरित्रम् ) मेव मुख्यम्, न तथा दानजपस्वाध्यायादिका इत्यस्मिन् विषये वर्त्तते सन्देहदोलाऽन्दोलितं मम मनः । तत्तस्य स्थैर्यसंविधानाय कथय 'किं तत् शीलम् ? तस्य किं तत्त्वम् ?, कथं च तदुपलभ्यते इति, चेत्तदस्मादृशां गोपनीयं न भवेत् ।

एतच्छ्रुत्वा भीष्म उवाच—

भो वत्स ! श्रूयतां तर्हि, यद्यस्तीदृशी ते तद्विषयिणी जिज्ञासा । पुरैकदा भवतां प्रवृत्ते राजसूययज्ञे नानादिग्देशात्सञ्चयितामतुलां लक्ष्मीं, तथा च देवसभाधिकशोभां भवदीयां सभां विलोक्य स्वाभाविकासूयेर्ष्याकलुषितान्तःकरणस्तत्रापि भवद्भिरुद्धतया च विशेषेण सन्तप्तचित्तो दुर्योधनस्तदानीमेव तत्रासीनं कुरुवरं पितरं धृतराष्ट्रमुपगम्यापृच्छत्—

अहो ! पितः ! एतावती समृद्धिः सुरेन्द्रस्यापि सदने नास्ति, न चैतत्समं सुखं देवा अपि प्राप्नुवन्तीति मन्ये, तत्कथमेते चेदृशा भाग्यवन्तः ?, इति वेत्तुमुत्कण्ठामपनय ।

धृतराष्ट्रः—भोः पुत्र ! हन्त !!! त्वयाऽप्यतुलनीयमैश्वर्यमाप्तम् । तवानुजाः, सुहृदादयः परिवाराश्चापि सदा किंकरा इवाज्ञाकरा वर्त्तन्ते । महाराजार्हमहन्मूल्यलब्धानि पट्टकौशेयादीनि वस्त्राणि परिदधासि, नित्यमगणितमृष्ट-पोलिका-लप्सिका-कुण्डलिनी-शिखरिणी-रसाला-मोदक-रसगोल-पिटक-प्रभृतिभिर्मिष्टान्नैरार्द्रकवटीकूष्माण्डवटी-तुम्बीवटी-मूलवटी-वृन्ताकालुकादिभिर्व्यञ्जनैर्बहुविधैः षड्-

सान्वितै रुचकैरनेकरूपैः, सुकोमलैरन्नैर्दुग्धदधिनवनीतघृतादिभिर्गव्यैश्च ननाविधमकरन्दवासितसुशीतलनिर्मलजलेन सह सुपक्वकदली-रसाल-पनस-दाड़िम-द्राक्षाऽबीजा-बीजपूरक-नारिकेल-जम्बू-प्रभृतिभिर्मणिखचितरजतकाञ्चनभाजने भोजनमाचरसि। सायं प्रातश्च राजमार्गे मनोजवाः स्यन्दननियुक्ता( योजिता ) बाजिनो वहन्ति ( भ्रामयन्ति ) त्वाम्। शारदीयपूर्णचन्द्रचन्द्रिकोज्ज्वले स्फटिकसुधाधवले सौधे दुग्धफेननिभशय्योपरि स्वपिषि, नहि साम्प्रतं पाण्डवा-अपि प्रतिकूलाः सन्ति, तर्हि कथं त्वमीदृशः साधारणजन इव परसम्पत्तिं विलोक्य विवर्णवदनोऽस्फुटवचनः खिद्यसे। इति श्रुत्वा-आह दुर्योधनः—

पितः! किमेवं बालमिव मां परिबोधयसि, क्व यौधिष्ठिरी सुरेन्द्रस्पृहणीया समृद्धिः, क्व च मदीयाऽनयोः पर्वतपरमाण्वोरिव वर्त्तते-ऽन्तरम्।

नो चे त्तर्हि कथय, युधिष्ठिरमहानसे यथा नित्यं सुवर्णस्थाल्यां दशसहस्रसंख्यकाः पीयूषोपममनेकविधमन्नं भुञ्जते, किं तथैव मदीयेऽपि पाकालये ?, तथा च यावन्ति रत्नानि यावन्तो नानाकृतयो मणयस्तत्र विलोकिता स्तावन्तस्तदन्यत्र पुनः क्व द्रक्ष्यामि ?, एवं दिव्यमृदुलपल्लवसुमनैरनेकै र्भक्ष्यपेयलेह्योष्यैः पदार्थैश्चालंकृतां तदीयां सभामद्राक्षं, नहि तादृशी मनोहरा सुधर्माऽपि भवेदिति मन्ये, तत्सर्वं स्मृत्वा विस्मरामि निजनय नस्पन्दनमपि। तथा च तित्तिरवर्णान् तदीयान् घोटकाँश्च, नानाविधानि पट्टकौशेयांशुकानि च विलोक्य, तत्प्रभृति मदीयं चेतस्ततोऽप्यधिकसम्पत्तिसम्पादनोपायं विचिन्तयदुद्विग्नं तदपहृतमिव प्रतिभाति, तद्यदि जानासि कमप्युपायं, तर्हि कथय तमिति ?।

एतच्छ्रुत्वा धृतराष्ट्रोऽब्रवीत्—

भो यद्येवमिच्छसि, तर्हि केवलं शील (चरित्र) वान् भव। यतस्त्रैलोक्यमपि शीलवता जेतुं शक्यते; नहि किमपि दुःसाध्यं शीलवतां जनानाम्।

तथाहि—पुरैकदा सूर्यवंशीयो मान्धाता नाम नरपतिः शीलबलेनैवेकरात्रेणाखिलामिलां जितवान्। एवं जनमेजयेन दिनत्रयेण, नाभागेन सप्तरात्रेण शीलेनैव वसुधा निजायत्तीकृता। एते सर्वे भूमिपतयः

शीलवन्तोऽतिदयावन्तश्चात एषां गुणैर्मोहिता वसुधा लक्ष्मीश्च स्वयं तानुपस्थिता ।

दुर्योधनः—

तर्हि तच्छीलं कथमुपलभ्यते, तत्सत्वरं कथय ? ।

धृतराष्ट्रः—

भो पुत्र ! शृणु, पुरैकदा शीलमेवोद्दिश्य पुरातन एक इतिहासो-नारदेन वर्णितस्तमुदाहरामि-एकदा शीलबलेन दैत्यप्रवरेण प्रह्लादेन सुरेन्द्रं जित्वा, तस्य पदमपहृतम्। त्रैलोक्यमपि स्वायत्तीकृतम्। ततो हतप्रभो गतश्रीकः सुरेन्द्रः सुरगुरो राश्रमं गत्वा, तं प्रणम्य पुरतो बद्धाञ्जलि भूत्वाऽपृच्छत् 'भो गुरो ! सर्वमुदन्तं वेत्सि एव, नहि किमप्यज्ञातं तव विद्यते. अतः कथय किं तज्ज्ञानं ?, येन सदा क्षेममेव भवति' इति श्रुत्वा बृहस्पतिर्मोक्षविषयकं ज्ञानं तस्मै आदिदेश। परन्तु तत् मनसि धृत्वाऽपि पुनरुवाच सुरेन्द्रः—गुरो ! इदं तु ज्ञातम्. इतोऽप्यधिकमपि चेद्भवेज्ज्ञानं, तदा तदपि कृपयाऽऽदिश, तव पादयोः पतामि।

गुरुः—हे देवेन्द्र ! चिरंजीव, अथ तद्विषयेऽस्ति मत्तोऽपि विशेषज्ञो भृगुर्दैत्यकुलगुरुः । तत्सकाशं गत्वा जानीहि तत् ।

तत इन्द्रो भार्गवसमीपं गत्वा तस्मादपि श्रेयष्करं ज्ञानं साधारणतयाऽवगम्य, तदधिकज्ञानजिज्ञासाञ्च कृतवान् ।

अथ ज्ञात्वैतदिन्द्रेच्छां भृगुरूचे, हे इन्द्र ! एतद्विषये मत्तोऽपि विशेषज्ञः प्रह्लादोनाम दैत्यराजो वर्त्तते इत्युक्त्वाऽन्तर्दधे। ततस्तदानीं विप्रवेषं विधाय मेधावी देवराजः प्रह्लादनिकटं गत्वा स्वकीयं ज्ञातव्यं च न्यवेदयत्। तच्छ्रुत्वा दैत्यराज आह—त्रैलोक्यराज्यभारव्यग्रस्य मे नास्त्यवकाशः शिक्षयितुम् ।

इति निराशजनकमुत्तरं निशम्य कार्यार्थी द्विजवेषधरः सुरेन्द्र-उवाच—

भो महाराज ! यदा भवतामवकाशो भवेत्तदैव मह्यं शिक्षां दास्यति, नहि मदर्थं भवद्भिः स्वकार्यलोपो विधेय इति ।

अथेदं धैर्यान्वितं वचनं निशम्य सन्तुष्टः प्रह्लादः शुभे मूहूर्त्ते तस्मै विप्रवेषधरायेन्द्राय ज्ञानतत्वं ददौ। ततः स चापि यथोचितां गुरुसेवामाचरन् प्रह्लादस्यातीव विश्वासपात्रं भूत्वा पुनरपृच्छत्।

भी ज्ञातव्यं तु सर्वं भवच्चरणानुकम्पया ज्ञातम्। किञ्चिदेतत्कौतूहल-मवशिष्टं तदपि कथय, कथं भवद्भिस्त्रैलोक्यराज्यमासादितमिति ? ।

ततः प्रह्लाद उवाच—

अहो विप्रवर ! शृणु, अहं खलु सर्वेषामुपरि वर्त्तमानोऽपि नहि कदाऽपि 'राजाऽस्मीति' गौरवेण ब्राह्मणानपश्यम, नहि पश्यामीदानीमपि ।

अपि तु तेषामुपदेशमादाय तद्वशे वसामि । ते चास्मद्भक्तिं श्रद्धां च विज्ञाय मां मुक्तहृदया भूत्वा सर्वं स्पष्टतया कथयन्ति, तदेतज्जगति अमृतम्, एतदेव सकलशिक्षारहस्यम्, एतदेव दिव्यं चक्षुर्यद्ब्राह्मणोपदिष्टं वचनं शिरसि संरक्ष्य प्रवर्त्तयितव्यम् ।

इत्युक्त्वा तस्यातीव शुश्रूषया तोषितो दैत्येन्द्रः सुरेन्द्रमुवाच—

भो विप्र ! तवानुपमया सेवया नितरां तुष्टोऽस्मि, तेनान्यमपि वरं तुभ्यं दातुमिच्छामि, तत्त्वं सत्वरं वृणीष्व' इति श्रुत्वाऽतिमुदितचित्त इन्द्रो बद्धाञ्जलिरुवाच—

यद्येवमनुग्रहो मयि, तर्हि किं नाम शीलमिति ज्ञातुं महतीच्छा मम वर्त्तते—अयमेव मम वरः, तत इतीन्द्रस्य गिरं श्रुत्वा तस्मै शीलस्योपदेशं तु दत्वा, तदनु 'नायं साधारणो जनः, अवश्यमेव प्रभाववान् जनः कोऽपि, इति चिन्तया विकलो जातः ।

एवं चिन्तयन् स्वस्य शरीराच्छायाकृति महाद्युति तेजोविशेषं निर्गतं दृष्ट्वाऽतिविस्मयापन्नो दैत्याधिपतिस्तमपृच्छत्' 'को भवान्?' 'कुतः क्व प्रयासि?' इति, एवं तेन पृष्टः 'शीलोऽस्म्यहम्' त्वया त्यक्तो गच्छामि वस्तुं भवच्छुश्रूषके ब्राह्मणे, इत्युक्त्वा इन्द्रशरीरे विवेश ।

अथ शीले निर्गते दैत्येन्द्रदेहात्पुनर्धर्मोऽपि पुरुषाकारो निर्गतस्तदनु सत्यं, तदनु वृत्तं, ततो बलं, तदन्तरं कमनीयकान्तिमयी लक्ष्मीश्च निर्ययौ ।

तत्र ते धर्म्मादयोऽपि प्रह्लादेनातिविस्मितेन पृष्टास्सन्तः स्वंस्वंनाम, तथा स्वसहचरं विना न कुत्राऽपि वसामोति गमनकारणं च विज्ञाप्य विप्रवेषवत इन्द्रस्य परिचयं (योहिविप्रस्त्वया शिक्षितः स तव राज्यापहारक इन्द्र आसीत्तेनैव त्रैलोक्यराज्यधारकहेतुंशीलमपहृतम्) अपि दत्वा इन्द्रशरीरे विविशुरिति ।

अथ दुर्योधनस्तु सर्वं शीलमाहात्म्यं निशम्य स्पष्टतया शीलं विज्ञातुमत्युत्कण्ठितः पुनः स्वजनकं प्रत्युवाच—

ततोऽवोचद्धृतराष्ट्रः—भोः पुत्र ! कर्मणा मनसा वाचाऽपि कदाऽपि नहि केष्वपि प्राणिषु द्रोहः, सदैवानुग्रहः, यथाशक्ति धनवितरणञ्चेति शीलं कथ्यते विज्ञैः ।

तथा च येन कर्मणा तु परेषामुपकारो नहि भवेत् , प्रत्युत लज्जैव जायते, तत्स्वोपकारकमपि कर्म न करणीयम् । अथवा येन कर्मणा समाजे कीर्त्तिर्वर्द्धते, अपयशो हीयेत्तदाचरणीयमित्येव शीललक्षणम् ।

यद्यपि शील ( चरित ) हीना अपि जनाः कदाचित् क्वचिच्छ्रियं लभन्ते, परन्तथापि ते न तां सम्यक् भुञ्जते, अपितु समूलनाशमाप्नुवन्ति ।

तदेतद्रहस्यं विदित्वा शीलवान् भव, यदि युधिष्ठिरादप्यधिकां श्रियमिच्छसीति, एवं धृतराष्ट्रेण दुर्योधनाय शीललक्षणमुक्तम् ।

तत् त्वमपि तथैवाचर, ततस्तत्फलं प्राप्स्यसीति ।

इति संक्षिप्तशीलनिरूपणाध्यायकथा समाप्ता ।



# अथ महाभारतीयशीलनिरूपणाध्यायः ।

प्रणम्य पूर्वं गुरुपादपङ्कजं, ध्यात्वा मुहुः श्रीकुलदेवताञ्च ।
कुर्वे ततः शीलनिरूपणस्य व्याख्यां सुधाख्यां शिशुबोधहेतोः ॥

युधिष्ठिर उवाच । ( युधिष्ठिर बोले ) ।

**इमे जना *नरश्रेष्ठ ! प्रशंसन्ति सदा भुवि ।**
**धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥१॥**

अन्वयः—हे नरश्रेष्ठ ! इमे जनाः, भुवि, आदौ, धर्मस्य, शीलम्, एव प्रशंसन्ति, ततः, मे, महान्, संशयः, ( भवतीति शेषः ) ।

व्याख्या—हे नरश्रेष्ठ ! = पुरुषर्षभ ! पितामह ! भीष्म ! भुवि = पृथिव्याम्, भूलोके इत्यर्थः, इमे = एते सर्वेऽपि, जनाः = लोकाः, ये ये परिचितास्ते ते इत्यर्थः । आदौ = प्रथमम्, धर्मस्य = सत्कार्यस्य शीलम् = शुद्धचरित्रत्वम्, एव = निश्चयेन, प्रशंसन्ति = कीर्त्तयन्ति, ततः = तस्मात्, तत् युक्तं वा न युक्तमिति तर्कतः, मे = मम, महान् = परमः, संशयः = सन्देहः, जायते इति शेषः । सर्वेषां धर्माचरणानां मध्ये शीलमेव प्रधानं कथमिति मम मनसि शंका उत्पद्यते ।

समासः—नरेषु श्रेष्ठः, नरश्रेष्ठस्तत्सम्बोधने हे नरश्रेष्ठ ! ।

व्याकरणम्—प्रशंसन्ति = प्र + शंस् + लट् ।

वाच्यान्तरम्—एभिर्जनैः धर्मस्य शीलमेव प्रशस्यते ।

कोषः—शुचौ तु चरिते शीलमित्यमरः (का० १ ख० १०) श्लो० ।

सारार्थः—महाभारतानन्तरं शरशय्योपरिशायिनं भीष्मं प्रति युधिष्ठिरः पृच्छति, यत् हे पितामह ! सर्वधर्माणां शीलमेव मुख्यं, तत्कथमिति कथयित्वा, मम सन्देहं दूरीकुरु इति ।

भाषाऽर्थः—शरशय्या पर सोये हुए भीष्मपितामह से युधिष्ठिर पूछते हैं कि, सब धर्मों में पहले, अच्छे स्वभाव ही को सब प्रशंसा करते हैं, सो क्यों ? मेरे इस भारी सन्देह को दूर कीजिये ॥१॥

---

* 'मनुष्येन्द्र !' इति वा पाठः । ( व्याख्या—मनुष्येन्द्र = मानवेन्द्र !, मनुष्येषु इन्द्रः, मनुष्येन्द्रस्तत्सम्बोधने हे मनुष्येन्द्र ! )

यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ! ।
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते ॥२॥

अन्वयः—हे धर्मभृतांवर ! तत्, यदि, अस्माभिः, ज्ञातुं, शक्यम्, यथा तत् उपलभ्यते च, तत् सर्वम्, श्रोतुं, इच्छामि ।

व्याख्या—हे धर्मभृतां = धार्मिकाणाम्, वर = श्रेष्ठ ! धर्मविद्वर ! इत्यर्थः । तत् = शीलम्, यदि = चेत्, अस्माभिः = अस्मत्सदृशैर्जनैः ज्ञातुम् = अवगन्तुम्, शक्यम् = योग्यम्, तथा कथं च, तत् = शीलम्, यथा = यद्विधिना, उपलभ्यते = प्राप्यते, तत् = शिक्षणविधानम्, सर्वं = निरवशेषं, अहं श्रोतुम् = इच्छामि = अभिलषामि ।

समासः—धर्मं बिभ्रति ये, ते धर्मभृतस्तेषां धर्मभृताम् ।

व्याकरणम्—ज्ञातुम् = ज्ञा + तुमुन् । इच्छामि = इष् + लट् । उपलभ्यते = उप + लभ + कर्मणि लट् ।

वाच्यान्तरम्—मया श्रोतुम् इष्यते उपलभते = उपलभे ।

सारार्थः—यदि अस्मादृशां तच्छीलं कथनार्हं, तर्हि कथय, कथं च तत्प्राप्तुं शक्यते ।

भाषाऽर्थः—हे धर्मवेत्ताओं में श्रेष्ठ !, पितामह जी ! अगर हम से वह जानने योग्य हो, तो कृपाकर बताइये, कैसे वह शील मिलता है, यह सब हम सुनना चाहते हैं ॥२॥

कथं तत्प्राप्यते शीलं ? श्रोतुमिच्छामि भारत ! ।
किं लक्षणं च तत् प्रोक्तं ? ब्रूहि मे वदतां वर ! ॥३॥

अन्वयः—हे भारत ! तत् शीलं कथं प्राप्यते ? इति अहं श्रोतुम्, इच्छामि । हे वदतांवर ! तत् च शीलं किं लक्षणं प्रोक्तम्, (इति) मे ब्रूहि ।

व्याख्या—हे भारत = भरतभूपवंशोत्पन्न ! तत् ( यत् धर्मस्य प्रथमं लक्षणम् ) = पूर्वोक्तम्, शीलम् = उत्तमस्वभावः, कथं = केन उपायेन, प्राप्यते = लभ्यते; इति अहं = युधिष्ठिरः, श्रोतुम् = आकर्णयितुम, इच्छामि = अभिलषामि । तथाच हे वदतां = वक्तॄणां, वर = श्रेष्ठ ! परोपदेशकुशल ! इत्यर्थः । तत् = धर्ममुख्यम्; च = तु, किं लक्षणम् = कीदृशचिह्नमत्, प्रोक्तम् = कथितम्, लक्षणैरितिशेषः । इति, मे = मम, ब्रूहि = कथय ।

व्याकरणम्—प्राप्यते = प्र + आप् + कर्मणि लट् । इच्छामि = इष् + लट् । ब्रूहि = ब्रू + लोट् ।

वाच्यान्तरम्—तत् प्राप्नोति = मि । श्रोतुम् इष्यते । उच्यताम् ।

कोषः—चिह्नं लक्ष्म च लक्षणमित्यमरः ।

सारार्थः—यत् धर्मेषु मुख्यं तच्छीलं केन विधानेन लभ्यते ? तथा च तस्य लक्षणं च किमिति भो पितामह ! मे कथयेति ।

भाषाऽर्थः—हे बाबा ! भरत वंशीय ! वह शील कैसे पाया जाता है, और उसका क्या लक्षण है, यह मुझे कहिये ॥३॥

भीष्मउवाच । ( भीष्मपितामह बोले । )

पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ! ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा*तथाऽऽगताम् ॥४॥
इन्द्रप्रस्थे महाराज ! तव सभातृकस्य ह ।
सभायां†चाह वचनं तत्सर्वं शृणु भारत ! ॥५॥

अन्वयः—हेमानद ! महाराज ! भारत ! पुरा इह इन्द्रप्रस्थे, सभ्रातृकस्य तव तथा आगतां श्रियं दृष्ट्वा, तप्यमानेन दुर्योधनेन सभायां धृतराष्ट्राय यत् वचनं च आह; तत् सर्वं शृणु ।

व्याख्या—हे मानद ! = सत्कारकारिन् ! महाराज ! भारत ? = युधिष्ठिर ! पुरा = पूर्वस्मिन् समये, इह = अत्रैव, इन्द्रप्रस्थे = तन्नामक-नगरे, सभ्रातृकस्य = ससहजस्य, भीमार्जुननकुलसहदेवादिभिः सहितस्य, तव = महाराजयुधिष्ठिरस्य, तथा = नानादिग्देशात् अपरिमेयां, आगतां = आनीताम्, जित्वा समानीतामित्यर्थः । श्रियं = सम्पदम् = लक्ष्मीम्, दृष्ट्वा = विलोक्य, तप्यमानेन = असूयाग्नितप्तान्तःकरणे न ।

---

* 'तवागताम् ।' इति वा पाठः ( व्याख्या—तव = भवतः, युधिष्ठिरस्येत्यर्थः । आगताम् = समागताम्, परित एकत्रीकृतामिति भावः ।

† 'चापहसनम्' । इति वा पाठः । ( अपहसनं = उपहासम्, मयासुरेण सभाभवनमीदृङ्निर्मितं, यत्र दुर्योधनस्य स्थले जलभ्रान्त्या धौतवस्त्रोत्थानम्, क्वचित् जलेऽपि स्थलभ्रान्त्या यथावद्गमनेन पिच्छिलतया पतनञ्च विलोक्य द्रौपदी जहास, तद्धसनमेव दुर्योधनस्य विशेषामर्षजनकं जातम्, तेनैवासौ सभायां द्यूतक्रीडया द्रौपदीं जित्वा विवस्त्रां कर्त्तुमिच्छत्, तदेवापहसनम् ।

दुर्योधनेन = तन्नाम्ना धृतराष्ट्रपुत्रेण, धृतराष्ट्राय = स्वपित्रे, यत् = यथामितं वचनं=वचः, च आख्यातम् = उक्तम्, तत् सर्वं, शृणु = निशामय।

समासः—भ्रातृभिः सह वर्त्तते इति सभ्रातृकस्तस्य सभ्रातृकस्य।

व्याकरणम्—आख्यातम् = आ + ख्या + क्तः। आह = ब्रू + लट्। शृणु = श्रु + लोट्।

वाच्यान्तरम्—तच्छ्रमान आख्यातवान्। उच्यते = श्रूयताम्।

कोषः—स्यात्प्रबन्धे चिरातीते निकटागामिके पुरेत्यमरः।

समज्या परिषद्गोष्ठी सभासमितिसंसद इत्यमरः।

व्याहार उक्तिर्लपितं भाषितं वचनं वच इत्यमरः।

सारार्थः—पुरा इन्द्रप्रस्थे भवतां राजसूययज्ञावसरे सम्पन्नामतुलां सम्पदं विलोक्यासूयाज्वालासन्तप्तचित्तेन दुर्योधनेन स्वपित्रे यन्निवेदितं, तत्सर्वमहं कथयामि, त्वं सावधानेन चेतसा शृणु।

भाषाऽर्थः—'इन्द्रप्रस्थ में पहले राजसूय यज्ञ के समय जुटाई गयी आप लोगों की दौलत को देख, डाह से जले हुए चित्तवाले दुर्योधन ने, सभा ही में अपने पिता (धृतराष्ट्र) से जो कुछ कहे, सो सब आपको मैं कहता हूँ, सुनिये ॥४॥५॥

**भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम्।**
**दुर्योधन*स्तदासीनः सर्वं पित्रे न्यवेदयत् ॥६॥**

अन्वयः—तदासीनः, दुर्योधनः, भवतः, तां, सभां, अनुत्तमाम्, समृद्धिं, च, दृष्ट्वा, सर्वं, पित्रे, न्यवेदयत्।

व्याख्या—तदासीनः = तत्रोपविष्टः, सभायां वर्त्तमान इत्यर्थः। दुर्योधनः = दुःखेन युध्यते इति धृतराष्ट्रज्येष्ठपुत्रः, भवतः = युधिष्ठिरस्य, ताम्, = देवदुर्लभाम्, स्मरणीयाम्, अदृष्टपूर्वाम् इत्यर्थः। अनुत्तमां = सर्वश्रेष्ठाम्. समृद्धिम् = धनराशिम्, दृष्ट्वा = विलोक्य, असूयाग्रस्तो भूत्वा, पित्रे=जन्मान्धाय धृतराष्ट्राय, सर्वं=सकलं=भवदतुलसम्पद्दर्शनम् (अहो कुत एतानि आनीतानि? कथं वा? अहह कथं ममापि तथैव भविष्यन्ति?, इत्यादि) न्यवेदयत् = अकथयत्।

* 'स्तदा दीनः' इति वा पाठः। (तदा = तदानीम्, युधिष्ठिरसमृद्धिदर्शनावसरे इति भावः। दीनः = खिन्नः स्वशत्रोरभ्युदयं दृष्ट्वा दैन्योत्पत्तिः स्वाभाविक्येवेति)।

व्याकरणम्—दृष्ट्वा = दृश् = क्त्वा। न्यवेदयत् = नि + विद् + णिच् + लङ्।

वाच्यान्तरम्—दुर्योधनेन न्यवेदयत्।

सारार्थः—युधिष्ठिरस्यातुलां सम्पत्तिमवलोक्यासहमानो दुर्योधनो धृतराष्ट्रायाकथयत्।

भाषाऽर्थः—सभा में बैठा हुआ दुर्योधन, आपकी अतुल ठाठ बाट देख कर, शिर नीचे किये, अपने बाप धृतराष्ट्र से सब कुछ कहा ॥६॥

**श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवचस्तदा।**
**अब्रवीत् कर्णसहितं दुर्योधनमिदं वचः ॥ ७ ॥**

अन्वयः—तदा, धृतराष्ट्रः, च, दुर्योधनवचः, श्रुत्वा, कर्णसहितं दुर्योधनम्, इदं वचः, अब्रवीत्।

व्याख्या—तदा = तस्मिन् काले, धृतराष्ट्रः = तन्नामकः दुर्योधनपिता जन्मान्ध इति शेषः, च = अपि, दुर्योधनवचः = तन्नामकपुत्रस्य वाक्यं, हि = निश्चयेन, सावधानो भूत्वेत्यर्थः। श्रुत्वा = आकर्ण्य, कर्णसहितम् = कर्णनाम्ना मित्रेण सह वर्त्तमानम्, दुर्योधनम् स्वज्येष्ठपुत्रम् प्रति, इदं = वक्ष्यमाणम्, वचः = वचनम्, अब्रवीत् = अवदत्।

समासः—धृतं राष्ट्रं येन सः धृतराष्ट्रः। दुःखेन युध्यते इति दुर्योधनस्तस्य दुर्योधनस्य वचः, दुर्योधनवचः, तत् दुर्योधनवचः। कर्णेन सह वर्त्तते इति कर्णसहितः।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा। अब्रवीत् = ब्रू + लङ्।

वाच्यान्तरम्—अबोच्यत।

सारार्थः—स्वपुत्रकथनं श्रुत्वा कर्णसमक्षे स्वज्येष्ठपुत्रं दुर्योधनं वक्ष्यमाणं वचोऽवदत्।

भाषाऽर्थः—धृतराष्ट्र, अपने बड़े पुत्र दुर्योधन की बातों को सुनकर कर्ण के साथ बैठे हुए उनसे आगे की बातें कहे ।७॥

धृतराष्ट्र उवाच। (धृतराष्ट्र दुर्योधन से बोले)।

**किमर्थं तप्यसे पुत्र ! श्रोतुमिच्छामि तत्त्वतः।**
**श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यति ॥८॥**

अन्वयः—हे पुत्र ! किमर्थं तप्यसे, 'तत्' तत्त्वतः श्रोतुं इच्छामि, श्रुत्वा यदि तत् सम्यग् भविष्यति, तदा त्वाम्, अहम्, अनुनेष्यामि।

व्याख्या—हे पुत्र ! पुन्नाम्नो नरकात्त्रायते इति पुत्रस्तत्सम्बोधने हे पुत्र ! किमर्थं = कस्मै हेतवे, तप्यसे = खिद्यसे, तव खेदस्य किं कारणमिति न जाने, तत् = कारणम्, तत्त्वतः = वस्तुतः, यथार्थतः, श्रोतुम् = आकर्णयितुम्, इच्छामि = अहमभिलषामि । तत् स्पष्टं कथय इति भावः । श्रुत्वा = तत् निशम्य, यदि = चेत्, तत् = त्वयोक्तम्, सम्यक् = युक्तियुक्तम्, भविष्यति = भवेत्, तदा, त्वाम् = दुर्योधनम्, अनुनेष्यामि = उत्तरेण सन्तोषयिष्यामि, अर्थाद्यदि भवदुक्तमलीकं स्यात्तदाऽहं सम्यगुत्तरं न दास्यामि । अनेन धृतराष्ट्रो-यथार्थवक्तेति सूच्यते ।

व्याकरणम्—तप्यसे = तप् + कर्तरि लट् । श्रोतुम् = श्रु + तुमुन् । इच्छामि = इष् + लट् । श्रुत्वा = श्रु + क्त्वा । अनुनेष्यामि = अनु + नी + लृट् । भविष्यति = भू + लृट् ।

वाच्यान्तरम्—त्वया किमर्थं तप्यते । मया श्रोतुम् इष्यते । त्वम् मया अनुनेष्यसे । यदि—सम्यक् (समीचीनेन) भविष्यते ।

कोषः—यथार्थतस्तत्त्वतश्च वस्तुत इति शब्दार्णवः ।

सारार्थः—दुर्योधनस्य असूयया वदनं म्लानकमलमिव विवर्णं, विलोक्य तथा चास्फुटं वचनं च श्रुत्वा तज्ज्ञानार्थं तं पृष्टवान् ।

भाषाऽर्थः—हे बेटा ! तूँ क्यों उदास हुए हो, मुझे ठीक ठीक कहो, मैं सुनना चाहता हूँ, अगर उसका सबब ठीक होगा, तो तुझे मैं समझाऊँगा ॥८॥

*त्वया च महदैश्वर्यं प्राप्तं परपुरञ्जय ! ।
किङ्करा भ्रातरः सर्वे मित्रसम्बन्धिनः सदा ॥९॥

अन्वयः—हे परपुरञ्जय ! (दुर्योधन !) त्वया च महत् ऐश्वर्यम्, प्राप्तम्, सर्वे भ्रातरः, मित्रसम्बन्धिनः (च) सदा किंकरा (इव तिष्ठन्ति) ।

व्याख्या—हे परपुरञ्जय ! = शत्रुराज्याक्रमणकारक ! यथा पाण्डवोऽपि धनंजयस्तथात्वमपीति भावः । त्वया = दुर्योधनेन, च =

* 'यदा त्वां महदैश्वर्यं मित्रसम्बन्धिबान्धवाः । इति वा पाठः । (व्याख्या—यदा = यस्मिन् समये, मित्रसम्बन्धिबान्धवाः = सखाप्रभृतयः स्वपरिवाराः, महदैश्वर्यं = विपुलधनम्, (महत् ऐश्वर्यं यस्य तं) त्वाम् = दुर्योधनम्, पश्यन्तीति शेषः) ।

अपि, महत् = अतुलम् , ऐश्वर्यं = विभवः, प्राप्तम् = लब्धम् , यथा पाण्डवो देशदेशान्तरात् भूपतीन् समरे जित्वाऽसंख्यानि धनानि एकीकृतानि, तथैव त्वयाऽपि भूरिधनानि अगणितान्यानीतानि इति भावः। सर्वे = सकलाः, तव = भ्रातरः = सोदराः शतसंख्यकाः, तथा मित्रसम्बन्धिनः = सुहृदो बान्धवाश्च, किंकरा = सेवका इव तिष्ठन्ति, यथा युधिष्ठिरस्य सर्वे भीमाद्या अनुजाः आज्ञापालकास्तथैव तवापि, प्रत्युत, तस्यापेक्षया तवैव विशेषेण बान्धवा वृद्धाश्च उपतिष्ठन्ति, तदा कथं पाण्डवानामैश्वर्यमवलोक्य ते ईदृशी असूया जातेति अहं न जानामि। वस्तुतः सन्तापकारणं न विलोक्यते मयेति भावः।

समासः—पुराणि जयतीति पुरञ्जयः, परस्य शत्रोः पुरञ्जय इति परपुरञ्जयस्तत्सम्बोधने परपुरञ्जय ! किमहं करोमीत्येवं ये स्वामिनं वदन्ति ते किंकराः। मित्राणि च सम्बन्धिनश्च मित्रसम्बन्धिनः।

व्याकरणम्—प्राप्तम् = प्र + आप् + क्तः।

वाच्यान्तरम्—त्वं महदैश्वर्यं प्राप्तवान्। सर्वैः किङ्करैः भ्रातृभिः स्थीयन्ते।

सारार्थः—यथा पाण्डवैरर्जितानि धनानि दृश्यन्ते, तथा त्वयाऽप्यर्जितानि, तथा च सर्वे परिवारास्तद्वदेवाज्ञाकरास्तदा किं स्वतोऽधिकमाशंक्य त्वं खिद्यसे, तत् वदेति।

भाषाऽर्थः—हे शत्रु के नगर को जीतनेवाले ! तूँने भी तो बड़ी सम्पत्ति एकट्ठी की, और तेरे दोस्त और भाई बेरादर भी तो हरवक्त आज्ञाकारी बने रहते, तब क्यों यह देख, दुखी होते हो ॥९॥

आच्छादयसि प्रावारानश्नासि पिशितौदनम्।
*आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥१०॥

अन्वयः—प्रावारान्, आच्छादयसि, पिशितौदनं, अश्नासि, आजानेयाः अश्वा वहन्ति, केन हरिणः कृशः असि।

---

* आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक !॥ (व्याख्या—हे पुत्रक ! = तनय ! आजानेयाः = श्यामकर्णकुलजाताः, घोटका इति शेषः। त्वां = भवन्तं दुर्योधनमित्यर्थः। वहन्ति = धारयन्ति, तदा (त्वं) कस्मात् कारणात् शोचसि, नहि चिन्ताहेतुर्विशेषो दृश्यते इति भावः)।

व्याख्या—प्रावारान् = उत्तरीयवस्त्राणि, काश्मीरपदकौशेयादीनीतिभावः, त्वम्, आच्छादयसि = ढौकसे, पिशितौदनम् = मांसमिश्रितान्नं, अश्नासि = भोजनं करोषि, तथा आजानेयाः = कुलीनाः प्रसिद्धोत्तमघोटकवंशजातीयाः, श्यामकर्णा इति भावः, अश्वाः = घोटकाः, त्वाम्, वहन्ति = स्वपृष्ठेन धारयन्तो धावन्ति, एते सकलसाधारणभूपदुर्लभाः प्रत्युत महाराजोपभोगयोग्याः पदार्थाः, ते सर्वे त्वयि वर्त्तन्ते एव, नहि चक्रवर्त्तिभोगयोग्यवस्तुना केनापि त्वं विरहितोऽसि, तदा, केन = कीदृशेन हेतुना, त्वं, हरिणः = पाण्डुवर्णः, चिन्तयाऽपगतरक्तः सन्, कृशः = दुर्बलः, शुष्कमात्र इति भावः असि = वर्त्तसे, तत् कथयेति। त्वया नैवं भाव्यम् इति भावः।

समासः—पिशितश्चौदनं च पिशितौदनम्।

व्याकरणम्—आच्छादयसि = आ + छद् + णिच् + लट्॥ अश्नासि = अश् + लट्। वहन्ति = वह + लट्। असि = अस् + लट्।

वाच्यान्तरम्—त्वया प्रावारा आच्छाद्यन्ते। पिशितौदनः अश्यते। अश्वैस्त्वम् ऊह्यसे। केन हेतुना त्वया हरिणेन कृशेन भूयते।

कोषः—द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यानमुत्तरीयं चेत्यमरः।

भिःस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदी दिविरित्यमरः।
पिशितं तरसं मांसं पललं क्रव्यमामिषम्, इत्यमरः।
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिन इत्यमरः।
घोटके वीतितुरगतुरंगाश्च तुरङ्गमा इत्यमरः।

सारार्थः—त्वं काश्मीरदेशीय-कौशेयादिबहुमूल्यवस्त्राणि पिदधासि। प्रत्यहं मृगयासमृगमांससहितमन्नमत्सि, अतीव वेगवतोऽश्वान् वाहयसि, एतावति महति महार्हे वस्तुनि वर्त्तमानेऽपि कथमसन्तुष्टो भूत्वा यत्किञ्चित् पाण्डवभयं विलोक्य खिन्नो भवसीति, तन्न युक्तमहं मन्ये इति।

भाषाऽर्थः—तुम अच्छे शाल दोशाले ओढ़ते पहनते हो, मांस के साथ अन्न प्रतिदिन खाते हो, अच्छे खानदानी घोड़े पर चलते हो, फिर क्यों सूख गये हो, सो बताओ ॥१०॥

दुर्योधनउवाच । ( दुर्योधन बोले ) ।

**दश *तानि सहस्राणि स्नातकानां महात्मनाम् ।**
**भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥११॥**

अन्वयः—महात्मनां स्नातकानां, तानि, दश, सहस्राणि, युधिष्ठिर-निवेशने, रुक्मपात्रीभिः, भुञ्जते ।

व्याख्या—महात्मनाम् = महाप्रभावाणां, स्नातकानाम् = वेदाध्ययननिरतानाम्, तानि दश सहस्राणि = अयुतमितानि इत्यर्थः । युधिष्ठिरनिवेशने = युधिष्ठिरमहानसे, रुक्मपात्रीभिः = स्वर्णस्थालीभिः, भुञ्जते = खादन्ति, भोजनं कुर्वन्तीति भावः ।

समासः—रुक्मस्य सुवर्णस्य पात्र्यः स्थाल्य इति रुक्मपात्र्यः, ताभिः रुक्मपात्रीभिः । युधिष्ठिरस्य निवेशनं युधिष्ठिरनिवेशनम्, तस्मिन् युधिष्ठिरनिवेशने ।

व्याकरणम्—भुञ्जते = भुज् + लट् ।

वाच्यान्तरम्—महात्मनां दशभिः सहस्रैः भुज्यते ।

कोषः—स्वर्णं कार्त्तस्वरं रुक्मं हेम काञ्चनमित्यपीति कोषः ।

सारार्थः—युधिष्ठिरमहानसे प्रत्यहमयुतं ब्राह्मणाः सुवर्णस्थाल्यां भुञ्जन्ति इति ।

भाषार्थः—महाराज युधिष्ठिर की रसोई में हर रोज दश हजार वेदाध्यायी ब्राह्मण लोग, सोने के थार में खाते हैं ॥११॥

**दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।**
**अश्वाँस्तित्तिरकल्माषान् †वस्त्राणि विविधानि च ॥१२॥**
**दृष्ट्वा तां पाण्डवेयाना‡मृद्धिं वैश्रवणीं शुभाम् ।**
**अमित्राणां सुमहतीमनुशोचामि §भारत ! ॥१३॥**

* तात सहस्राणि, इति वा पाठः । ( व्याख्या-तात ! = पितः ! ) ।

† 'रत्नानि' इति वा पाठः । ( व्याख्या-रत्नानि = मणीन् ) ।

‡ 'मृद्धिमिन्द्रोपमां' इति वा पाठः । ( व्याख्या-इन्द्रोपमाम् = इन्द्रसम्पत्तिसमाम्, ऋद्धिम् = ऐश्वर्यम् ) ।

§ 'मानद ! ' इति वा पाठः । ( व्याख्या—मानद ! = सम्मानकारक ! ) ।

अन्वयः—हे भारत! अमित्राणां पाण्डवेयानाम्, तां च दिव्यां दिव्यपुष्पफलान्वितां सभां दृष्ट्वा तित्तिरकल्माषान् अश्वान् च, विविधानि वस्त्राणि च, सुमहतीं शुभां वैश्रवणीं ऋद्धिम् दृष्ट्वा अनुशोचामि।

व्याख्या—हे भारत! भरतकुलप्रसूत! पितः! अमित्राणाम्=विरुद्धपक्षिणाम्, पाण्डवेयानाम्=पाण्डुपुत्राणाम्=पाण्डवानामिति शेषः। युधिष्ठिरप्रभृतिपञ्चभ्रातॄणाम्। ताम्=अदृष्टपूर्वाम्. दिव्याम्=रम्याम्, दिव्यपुष्पफलान्विताम्=रुचिरकुसुमफलसंयुताम्, सभाम्=समितिम्, तथा च तित्तिरकल्माषान्=तित्तिरपक्षिवर्णसमानवर्णान्, अश्वान्=घोटकान्, च दृष्ट्वा, तथा च विविधानि=नानारूपाणि वस्त्राणि=पट्टकौशेय-शालादीनि, परिधानानि, उत्तरीयाणि च, दृष्ट्वा=अवलोक्य, सुमहतीं=अतिविपुलतमाम्, शुभाम्=परिष्कृताम्, वैश्रवणीं कौवेरीम्=कुवेरसम्बन्धिनीम्, ऋद्धिम्=सम्पत्तिम्, दृष्ट्वा=विलोक्य, अनुशोचामि=सखेदमनुभवामीति।

समासः—दिव्यानि पुष्पाणि फलानीति दिव्यपुष्पफलानि, तैर्दिव्यपुष्पफलैरन्विता इति दिव्यपुष्पफलान्विता, तां दिव्यपुष्पफलान्विताम्। तित्तिरा इव कल्माषाश्चित्रवर्णा ये तान् तित्तिरकल्माषान्। वैश्रवणः कुवेरस्तत्सम्बन्धिनी वैश्रवणी, तां वैश्रवणीम्। न मित्राणि इति अमित्राणि, तेषां अमित्राणाम्,।

व्याकरणम्—दृष्ट्वा=दृश्+क्त्वा। अनुशोचामि=अनु+शुच्+लट्।

वाच्यान्तरम्—मया अनुशुच्यते।

कोषः—सभासमितिसंसद इत्यमरः।

घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमा इत्यमरः।
चित्रं किर्मीरकल्माषशवलैताश्च कर्बुरे-इत्यमरः।

सारार्थः—शत्रूणां पाण्डवानां देवसभामिव तां सभां, चित्रवर्णान् घोटकाँश्च, कुवेरस्येव समृद्धिं चालोक्याहमनुशोचामि इति।

भाषार्थः—मैं सुन्दर फूल, फलों से सुसज्जित उन शत्रुरूप पाण्डवों की सभा को देख, और उसके चित्र रंग के घोड़ों को देख, तथा कुबेर की नाईं उसकी दौलत को देख शोच रहा हूँ॥१२॥१३॥

धृतराष्ट्र उवाच। (दुर्योधन से धृतराष्ट्र बोले)।

**यदीच्छसि श्रियं तात ! यादृशीं सा युधिष्ठिरे।**
**विशिष्टां वा नरव्याघ्र! शीलवान् भव पुत्रक ! ॥१४॥**

अन्वयः—हे नरव्याघ्र ! तात ! युधिष्ठिरे सा यादृशी 'वर्त्तते', तादृशीं श्रियं यदि इच्छसि, वा विशिष्टां इच्छसि, तदा हे पुत्रक ! शीलवान् भव।

व्याख्या—हे नरव्याघ्र ! पुरुषर्षभ ! तात = प्रिय ! युधिष्ठिरे = ज्येष्ठपाण्डवे, तव विपक्षे इत्यर्थः। सा = उत्तमा श्रीः, यादृशी = यथा-रूपा, अस्ति, तादृशीं श्रियं = सम्पदम्, यदि = चेत्, त्वं इच्छसि = अभिलषसि, वा = अथवा, विशिष्टाम् = युधिष्ठिरश्रियोऽधिकाम्, श्रियं, इच्छसि = अभिलषसि, तदा = तर्हि, शीलवान् = सत्स्वभाव-शाली, भव। आदौ शीलमेव सम्पादय, ततः श्रीः स्वयमागमिष्यति।

समासः—नराणां मध्ये व्याघ्रः सर्वप्रधान इव वर्त्तते यः स नर-व्याघ्रस्तत्सम्बोधने हे नरव्याघ्र ! शीलमस्यास्तीति शीलवान्।

व्याकरणम्—इच्छसि = इष् + लट्। भव = भू + लोट्।

वाच्यान्तरम्—त्वया इष्यते। हे पुत्रक ! त्वया शीलवता भूयताम्।

सारार्थः—पुत्रस्य वचनं श्रुत्वा धृतराष्ट्रः प्रत्युत्तरं ददाति हे पुत्र ! यदि तत्समं तदधिकं वा ऐश्वर्यं लब्धुमिच्छसि, तदाऽऽदौ शीलम-र्जय। यतः शीलवतो जनस्य स्वयं श्रीरुपैति।

भाषाऽर्थः—हे पुत्र ! जैसी सम्पत्ति युधिष्ठिर को है, अगर वैसी ही, या उससे ज्यादे दौलत चाहते हो, तो सब से पहले शील-वान् बनो ॥१४॥

**शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः।**
**न हि किंचिदसाध्यं वै लोके शीलवतां*भवेत् ॥१५॥**

अन्वयः—शीलेन त्रयः लोकाः हि जेतुं शक्याः (अत्र) संशयः न (अस्ति) लोके शीलवतां वै किंचित् असाध्यं नहि भवेत्।

व्याख्या—शीलेन = सत्स्वभावेन, त्रयः = भूर्भुवःस्वःसमाख्याः, लोकाः = भुवनानि, हि = निश्चयेन, जेतुम् = वशीकर्त्तुम्, शक्याः =

* 'सताम्' इति वा पाठः। (व्याख्या—सतां = सज्जनानाम्)।

साध्याः, अत्र संशयः = सन्देहः, नहि अस्तीति शेषः । लोके = भुवने शीलवताम् = सत्प्रकृतिमताम्, वै = निश्चयेन, किञ्चित् = किमपि, असाध्यम् = अशक्यम्, नहि भवेत्. शीलवतां सर्वं वस्तु साध्यमेव भवतीति ।

व्याकरणम्—शक्याः = शक् + यत् । जेतुम् = जि + तुमुन् । भवेत् = भू + विधि लिङ् ।

वाच्यान्तरम्—लोके शीलवतां केनचित् असाध्येन नहि भूयेत ।

कोषः—लोकस्तु भुवने जने इत्यमरः ।

सारार्थः—शीलेनैव सर्वे लोका वशीकर्त्तुं शक्यन्तेऽतो ये शीलवन्तस्तेषां सर्वं करतलगतमिव भवति ।

भाषार्थः—शील ही से तीनों लोक वश में हो सकते हैं इसमें जरा भी सन्देह नहीं है, इस दुनियां में शीलवानों के लिये कुछ दुर्लभ नहीं है ॥१५॥

एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं *प्रतिपेदिरे ॥१६॥

अन्वयः—मान्धाता एकरात्रेण, जनमेजयः त्र्यहेण, नाभागः सप्तरात्रेण, पृथिवीं प्रतिपेदिरे ।

व्याख्या—मान्धाता = एतन्नामकोऽयोध्यावासी युवनाश्वराजपुत्रः, एकरात्रेण = एकाहोरात्रेण, जनमेजयः = एतन्नामकः कश्चित् भूपविशेषः ( अत्रार्जुनस्य प्रपौत्रो जनमेजय इति नाशंकनीयम्, एकनाम्ना प्रसिद्धा अनेके राजानो भिन्नभिन्नसमये अभवन्, भवन्ति च, अयं सूर्यवंशीयो विशालनामकनृपस्य वंशीयः सुमतेस्तनय आसीत् । ) त्र्यहेण = वासरत्रयेण, नाभागः = एतन्नामा सूर्यवंशोत्पन्नोऽम्बरीषस्य जनको महीपतिरासीत्, स सप्तरात्रेण = दिनसप्तकेन, पृथिवीं = सकलां पृथ्वीं, प्रतिपेदिरे = प्राप्तः, केवलं शीलेनैवेति शेषः ।

समासः—एका रात्रिरेकरात्रम्, तेनैकरात्रेण । त्रयाणामह्नां समाहारस्त्र्यहम्, तेन त्र्यहेण । सप्तानां रात्रीणां समाहारः सप्तरात्रम् तेन सप्तरात्रेण ।

व्याकरणम्—प्रतिपेदिरे = प्रति + पद् + लिट् ।

* 'प्रतिपेदिवान्' इति वा पाठः । (व्याख्या—प्रतिपेदिवान् = प्राप्तवान्) ।

वाच्यान्तरम्—मान्धातृप्रभृतिभिः पृथिवी प्रतिपेदे ।

सारार्थः—शीलबलेनैव मान्धाता नामको महाराज एकेन दिनेनैव, सम्पूर्णधरित्रीसाम्राज्यं लब्धवान्, जनमेजयस्तु दिनत्रयेण सकलां पृथ्वीं वशीकृतवान्, नाभागनामा राजा तु सप्ताहेन, सकलभूमिपतिं शीलेन वशीकृत्य तद्राज्यमासादितवान् ।

भाषाऽर्थः—महाराज मान्धाता ने एक ही रोजमें पृथ्वी को वश किया, महाराज जनमेजय ने तीन दिनों में इस पृथिवी को वश किये । और महाराज नाभाग ने एक हप्ता में वश किये ॥१६॥

**एते हि पार्थिवाः सर्वे शीलवन्तो दयान्विताः❀ ।**
**अतस्तेषां गुणक्रीता वसुधा स्वयमागता ॥१७॥**

अन्वयः—हि एते सर्वे पार्थिवाः शीलवन्तः, दयान्विताः, आसन् अतः, तेषां गुणक्रीता वसुधा स्वयम् आगता ।

व्याख्या—हि = यतः, एते = इमे, सर्वे = पूर्वोदिताः सकलाः, पार्थिवाः = भूमिपतयः, शीलवन्तः = सत्प्रकृतिमन्तः, तथा च, दयान्विताः = क्षमासंयुताः, आसन्, अतः = अस्मात् कारणात्, तेषाम् = भूपतीनाम्, गुणक्रीता = गुणैर्वशीकृता सती, वसुधा = भूमिः, स्वयम् = आत्मना, आगता = समागता ।

समासः—शीलमेतेषामस्तीति शीलवन्तः । दयया अन्विता दयान्विताः । गुणैः दयादाक्षिण्यादिभिः क्रीता वशीकृता इति गुणक्रीता ।

कोषः—क्षान्तिः क्षमा तितिक्षा च दया च करुणा घृणा इत्यमरः ।

सारार्थः—मान्धातादयो भूपाः शीलवन्तो दयादाक्षिण्यादिभिः संयुता आसन् अतस्तेषामधीना भूत्वा इयं पृथ्वी आसीत् ।

भाषाऽर्थः—मान्धाता आदि सब राजा लोग, शीलवान् और दयावान् थे, इसी से उन लोगों के गुण से खरीदी हुई यह पृथ्वी खुद आधीनमें रहती थी ॥१७॥

दुर्योधनउवाच (दुर्योधन बोले) ।

**कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ! ।**
**येन शीलेन †तैः प्राप्ता क्षिप्रमेव वसुन्धरा ॥१८॥**

---

❀ 'यशोऽन्विताः' इति वा पाठः । (व्याख्या—यशोऽन्विताः = कीर्त्तिमन्तः) ।

† 'संप्राप्ता' इति वा पाठः । (व्याख्या—संप्राप्ता = समधिगता ) ।

अन्वयः—हे भारत ! तत् शीलं कथं प्राप्यते, इति श्रोतुम्, इच्छामि, तैः येन शीलेन क्षिप्रम्, एव, वसुन्धरा प्राप्ता ।

व्याख्या—हे भारत ! = भरतवंशीय ! तत् = भवदुक्तं, शीलम् = सत्प्रकृतिः, कथम् = केन प्रकारेण, प्राप्यते = लभ्यते, इति अदः श्रोतुम् = आकर्णयितुम्, इच्छामि = अभिलषामि, तैः = मान्धातादिभिः, येन = यादृशेन, शीलेन = सत्स्वभावेन, क्षिप्रम् = शीघ्रम्, एव = निश्चयेन, वसुन्धरा = पृथ्वी, प्राप्ता = अधिगता । तत् वदेति शेषः ।

व्याकरणम्—प्राप्यते = प्र + आप् + कर्मणि लट् । इच्छामि = इष् + लट् । प्राप्ता = प्र + आप् + क्तः ।

वाच्यान्तरम्— तत् कथं प्राप्नोति । मया श्रोतुम् इष्यते ।

सारार्थः—मान्धातादिभिर्महाराजैर्येन शीलेन इयं पृथिवी वशीकृता, तत्कथमवाप्यते इति, कृपया मे कथय, मम श्रवणायात्युत्कण्ठा वर्त्तते इति शेषः ।

भाषार्थः—हे भरतवंशीय पिताजी ! उन राजाओं ने जिस स्वभाव से जल्दी से इस पृथिवी को पाई, वह शील कैसे पाया जाता है, यह मैं सुनना चाहता हूँ ॥१८॥

धृतराष्ट्र उवाच ( धृतराष्ट्र बोले ) ।

**अत्राप्युदाहरन्तीॐदमितिहासं पुरातनम् ।**
**नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत ! ॥१९॥**

अन्वयः—हे भारत ! अत्र अपि 'विज्ञाः' शीलम्, आश्रित्य पुरा नारदेन प्रोक्तं पुरातनम्, इदम्, इतिहासम्, उदाहरन्ति ।

व्याख्या—हे भारत ! = भरतसंज्ञनृपवंशीय ! दुर्योधन ! अत्र = शीलविषये, अपि = एव, इतिहासज्ञा विज्ञास्तु, शीलम् = सत्स्वभावं, आश्रित्य = अवलम्ब्य, पुरा = पूर्वस्मिन् समये, नारदेन = एतन्नाम्ना ब्रह्मणो मानसपुत्रेण देवर्षिणा, प्रोक्तम् = कथितम्, इदम् = वक्ष्यमाणम्, पुरातनं = प्राचीनम्, इतिहासं = कथानकम्, उदाहरन्ति = उद्गिरन्ति, कथयन्तीत्यर्थः ।

ॐ अत्राप्युदाहरन्तीममितिहासं पुरावृतमिति पाठ एव साधुः । इतिहासशब्दस्य नित्यपुल्लिङ्गदर्शनात् । ( व्याख्या-पुरावृतम् = भूतपूर्वम् ) ।

व्याकरणम्—उदाहरन्ति = उत् + आ + हृ + लट् । प्रोक्तम् = प्र + वच् + क्तः । आश्रित्य = आ + श्रि + ल्यप् ।

वाच्यान्तरम्—जनैरिदमुदाहर्यते ।

कोषः—इतिहासः पुरावृत्तमित्यमरः ।

सारार्थः—शीलविषये नारदेनोदाहृतमेकं प्राचीनमितिहासं वृद्धपरम्परया श्रुतं साम्प्रतं कथयामि तत् सावधानो भूत्वा शृणु ।

भाषाऽर्थः—यहां भी शील के बारे में नारद से कहे हुए प्राचीन इतिहास को बूढ़े लोग कहा करते हैं, उसको तुमसे मैं कहता हूँ, सुनो ॥१९॥

**प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः ।**
**शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशे कृतम् ॥२०॥**

अन्वयः—दैत्येन प्रह्लादेन शीलम्, आश्रित्य महात्मनः, महेन्द्रस्य, राज्यं हृतम्, त्रैलोक्यं च वशे कृतम् ।

व्याख्या—दैत्येन = दितिवंशीयेन, हिरण्यकशिपुपुत्रेण, प्रह्लादेन = एतन्नामकेन, शीलम्, = सच्चरित्रमेव, आश्रित्य = अङ्गीकृत्य, महात्मनः = महाप्रभावस्य, महेन्द्रस्य = देवेन्द्रस्य, राज्यम् = त्रैलोक्यराज्यम्, हृतम् = गुणोत्कर्षतयाऽऽत्मसात्कृतम्, त्रैलोक्यं = भुवनत्रयम्, च = अपि, वशे = आधीने, कृतम् = विहितम्, ।

समासः—महाँश्चासाविन्द्रः, महेन्द्रः तस्य महेन्द्रस्य । त्रयाणां लोकानां समाहारस्त्रैलोक्यम् ।

व्याकरणम्—हृतम् = हृ + क्तः । आश्रित्य = आ + श्रि + ल्यप् । कृतम् = कृ + क्तः ।

वाच्यान्तरम्—प्रह्लादः त्रैलोक्यं वशे कृतवान् ।

सारार्थः—केवलं शीलबलेनैव प्रह्लादेन देवराजो विजितः । त्रिभुवनञ्च वशीकृतम् ।

भाषाऽर्थः—शील ही से प्रह्लाद ने जबरदस्त इन्द्र को जीता, और तीनों लोक को वश किया ॥२०॥

**ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।**
**तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥२१॥**

अन्वयः—ततः, महाप्राज्ञः, प्राञ्जलिः, शक्रः, बृहस्पतिं, समुपस्थितः, श्रेयो वेदितुं इच्छामि इति, तम्, उवाच।

व्याख्या—ततः = प्रह्लादेनेन्द्रस्य वशीकरणानन्तरम्, महाप्राज्ञः = प्रत्युत्पन्नमतिः, प्राञ्जलिः = बद्धाञ्जलिः, शक्रः = इन्द्रः, बृहस्पतिम्, = एतन्नामकं देवगुरुम्, प्रति, समुपस्थितः = समीपं गतः, तत्र श्रेयः = कल्याणं, स्वोन्नतिकरमुपदेशमित्यर्थः, वेदितुं = ज्ञातुम्, इच्छामि = अभिलषामि" इति, तं = बृहस्पतिं, उवाच = अवदत्।

समासः—प्रकृतः अञ्जलिर्येन स प्राञ्जलिः। महती प्रज्ञा यस्य सः महाप्राज्ञः।

व्याकरणम्—समुपस्थितः = सम् + उप + स्था + क्तः। उवाच = ब्रू + लिट्। इच्छामि = इष् + लट्। वेदितुम् = विद् + तुमुन्।

वाच्यान्तरम्—बृहस्पतिं समुपस्थितेन शक्रेण स ऊचे। मया श्रेयः वेदितुं इष्यते।

कोषः—बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुरित्यमरः।

सारार्थः—यदा प्रह्लादेन विजितो देवराजः स्वगुरोर्बृहस्पतेः समीपं गत्वा स्वपराभवदूरीकरणाय शत्रुविजयोपायमपृच्छत्।

भाषाऽर्थः—प्रह्लाद से हार जाने पर बड़े बुद्धिमान् इन्द्र, बृहस्पति के पास जाकर हाथ जोड़ कर अपने कल्याण के लिये पूछे ॥२१॥

**ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम्।**
**कथयामास भगवान् देवेन्द्राय कुरूद्वह! ॥२२॥**

अन्वयः—हे कुरूद्वह! ततः, भगवान्, बृहस्पतिः, तस्मै देवेन्द्राय, नैःश्रेयसं परं ज्ञानम्, कथयामास।

व्याख्या—हे कुरूद्वह! = कुरुकुलोत्पन्न! दुर्योधन! इति धृतराष्ट्रकृतं सम्बोधनम्। ततः = इन्द्रप्रश्नकरणानन्तरम्, भगवान् = ज्ञानैश्वर्यसम्पन्नः, बृहस्पतिः = एतन्नामकः सुरगुरुः, तस्मै = पृच्छकाय, देवेन्द्राय = देवराजाय, परम् = परमम्, उत्कृष्टमित्यर्थः। नैःश्रेयसम् = शत्रुजालमोक्षविषयकम्, ज्ञानम् = उपदेशरूपम्, कथयामास = उवाच।

समासः—देवानामिन्द्रः, देवेन्द्रस्तस्मै देवेन्द्राय, उत् वहतीति उद्वहः, कुरूणामुद्वहः कुरूद्वहः।

व्याकरणम्—कथयामास = कथ + स्वार्थिकणिच् + लिट्।

वाच्यान्तरम्—भगवता बृहस्पतिना तस्मै ज्ञानं कथयामासे ।

सारार्थः—इन्द्रस्य करुणात्मकं वचनं निशम्य बृहस्पतिस्तस्मै पराभवदूरीकरणज्ञानं उवाच ।

भाषाऽर्थः—उसके बाद, परम विज्ञानवान् बृहस्पति देवराज इन्द्र से कल्याण कर उपदेश कहे ॥२२॥

**एतावच्छ्रेय इत्येवं बृहस्पतिरभाषत ।**
**इन्द्रस्तु भूयः पप्रच्छ को विशेषो भवेदिति ॥२३॥**

अन्वयः—बृहस्पतिः, 'एतावत् एव श्रेयः' इति अभाषत । इन्द्रस्तु विशेषः कः भवेत्, इति भूयः पप्रच्छ ।

व्याख्या—बृहस्पतिः = देवगुरुः, एतावत् = परं ज्ञानम्, एव = निश्चयेन, श्रेयः = कल्याणकारकम्, इति = ईदृग्वचनम्, अभाषत = उक्तवान्, ततः, इन्द्रः = देवराजः, तु = अपि, अस्मादपि, विशेषः = श्रेष्ठतरः, कः = कश्चित्, भवेत् = अस्ति, ईदृक् भूयः = पुनः, बृहस्पतिं पप्रच्छ = पृष्टवान् ।

व्याकरणम्—अभाषत = भाष् + लङ् । पप्रच्छ = प्रच्छ + लिट् । भवेत् = भू + विधिलिङ् ।

वाच्यान्तरम्—बृहस्पतिना एवम् अभाष्यत । इन्द्रेण भूयः पप्रच्छे । केन विशेषेण भूयेत ।

कोषः—श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं त्रिषु इत्यमरः ।

सारार्थः—निःश्रेयसं ज्ञानमुक्त्वा, एतावदेव श्रेयः साधकं वस्त्वस्ति इति उक्ते बृहस्पतौ, पुनस्तं देवराजोऽपृच्छद्यदतोऽपि किमपि विशेषतरं ज्ञानं विद्यते ? इति ।

भाषाऽर्थः—बस इतना ही यह कल्याणकर है, यह बृहस्पति के कहने पर, फिर भी इन्द्र पूछे कि इससे भी और ज्यादे कुछ होता है ? ॥२३॥

बृहस्पतिरुवाच ( बृहस्पति बोले ) ।

**विशेषोऽस्ति महांस्तात ! भार्गवस्य महात्मनः ।**
**❀अत्रागमय भद्रं ते भूय एव सुरर्षभ ! ॥२४॥**

❀ तत्रागमय भद्रं ते भूय एव सुरोत्तम ॥ इति वा पाठः ।

व्याख्या—( तत्र = भार्गवाश्रमे, सुरोत्तमः = देवश्रेष्ठः । देवराजइत्यर्थः ) शेषमुपर्येव व्याख्यातम् ।

अन्वयः—हे तात ! सुरर्षभ ! महात्मनः भार्गवस्य, महान् विशेषः अस्ति, 'तस्मात्' अत्र भूय एव आगमय, ते भद्रं, 'भविष्यति' ।

व्याख्या—हे तात = प्रिय, सुरर्षभ = देवप्रधान ! अत्र = अस्मिन् ज्ञानविषये महात्मनः = महाप्रभावस्य, भार्गवस्य = दैत्याचार्यस्य शुक्रस्येत्यर्थः, महान् = अत्यधिकः, विशेषः = वैलक्षण्यम् अस्ति = वर्त्तते । तस्मात् कारणात् त्वं तं प्रति, भूयः = पुनः, आगमय = ते = तव इन्द्रस्य, भद्रम् = कल्याणम्, भविष्यति । भृगोरपत्यं पुमान् भार्गवः ।

व्याकरणम्—अस्ति = अस् + लट् । आगमय = आ + गम् + णिच् + लोट् ।

वाच्यान्तरम्—भार्गवस्य महता विशेषेण भूयते । त्वया आगम्यताम् । णिजन्तात्कर्मणि लोट् ।

कोषः—उशना भार्गवः कविरित्यमरः ।

साराथः—मदधिकं ज्ञानं शुक्रो जानाति, स ते कथयिष्यति, अतस्तत्सकाशं गत्वा शिक्षस्व ।

भाषाऽर्थः—हे प्रिय इन्द्र ! इससे भी ज्यादे ज्ञान, शुक्र के पास है, इसलिये, वहां जाओ, तुम्हारा कल्याण होगा ॥२४॥

**आत्मनस्तु ततः श्रेयो *भार्गवात् सुमहातपाः ।**
**ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः ॥२५॥**

अन्वयः—ततः, सुमहातपाः, परमद्युतिः स, प्रीत्या भार्गवात् आत्मनः, श्रेयः, ज्ञानम्, पुनः, आगमयत् ।

व्याख्या—ततः = गुरोरुपदेशानन्तरम्, सुमहातपाः = अतितपस्वी, परमद्युतिः = उत्कृष्टप्रतिभावान्, सः = इन्द्रः, प्रीत्या = भक्त्या, भार्गवात् = शुक्रात्, आत्मनः स्वस्य, श्रेयः = क्षेमकरं, ज्ञानम् = उपदेशं, पुनः = भूयः, आगमयत् = लब्धवान् ।

समासः—महत् तपो विद्यते यस्य स महातपाः । सु = अतीव महातपा इति सुमहातपाः । परमा उत्कृष्टा द्युतिः कान्तिर्यस्य सः परमद्युतिः ।

* भार्गवः सुमहायशाः, इति वा पाठः । व्याख्या ( भार्गवः = भृगुपुत्रः, सुमहायशाः = प्रसिद्धकीर्त्तिः ) ।

व्याकरणम्—आगमयत् = आ + गम् + णिच् + लङ् ।

वाच्यान्तरम्—सुमहातपसा इन्द्रेण श्रेयो ज्ञानम् आगम्यत् (णिजन्तात्कर्मणि लङ् )।

सारार्थः—श्रेयोलाभाय तपस्वी इन्द्रो भार्गवान्तिकं भक्त्या गत्वा ततो ज्ञातव्यमधिगतवानिति ।

भाषाऽर्थः—उसके बाद अति तपस्वी, तेजस्वी इन्द्र ने शुक्र के पास जाकर अपने कल्याणकारक ज्ञान का लाभ किया ॥२५॥

तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ॥२६॥

अन्वयः—तेन महात्मना भार्गवेण, समनुज्ञातः, शतक्रतुः, पुनः श्रेयः अस्ति ? इति शुक्रम्, आह ।

व्याख्या—तेन = दैत्यगुरुणा प्रसिद्धेन, महात्मना = महाप्रभावेण, भार्गवेण = भृगुपुत्रेण, शुक्रेणेत्यर्थः, समनुज्ञातः = सम्यगुपदिष्टः, शतक्रतुः = इन्द्रः, पुनः = इतोऽधिकमपि, श्रेयः = कल्याणम्, अस्ति = वर्त्तते ? इति = एवम्, भूयः = पुनः शुक्रम् = भार्गवम्, आह = उवाच ।

समासः—शतं शतसंख्याकाः क्रतवो यज्ञाः सन्ति यस्य सः शतक्रतुः ।

व्याकरणम्—समनुज्ञातः = सम् + अनु + ज्ञा + क्तः । अस्ति = अस् + लट् । आह = ब्रू + लट् ।

वाच्यान्तरम्—समनुज्ञातेन शक्रेण पुनर्भार्गव ऊचे ।

सारार्थः—शुक्रतो दिव्यमुपदेशं लब्ध्वा पुनरधिकज्ञानलाभलिप्सया सविनयं शुक्रमेवाह । यद्यस्ति तर्हि तदप्यादिश मामिति ।

भाषाऽर्थः - महात्मा शुक्र से ज्ञान पाकर भी इन्द्र फिर भी उन्हीं से और ज्ञानोपदेश के लिये पूछा ॥२६॥

भार्गवस्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेणेत्युक्तो*ऽहृष्टश्च सोऽभवत् ॥२७॥

---

* हृष्टश्च सोऽभवत् । इति वा पाठः । (व्याख्या—हृष्टः = हर्षितः, शेषमुक्तमेव ) ।

अन्वयः—सर्वज्ञः भार्गवः तु महात्मनः प्रह्लादस्य विशेषेण ज्ञानम्, अस्ति, इति उक्तः सः अदृष्टः च अभवत् ।

व्याख्या—सर्वज्ञः = चराचरवृत्तान्तज्ञः, भार्गवः = शुक्रः, तु = अपि, महात्मनः = महाऽनुभावस्य, प्रह्लादस्य = हिरण्यकशिपुपुत्रस्य, बलिपितुरित्यर्थः । विशेषेण = आधिक्येन, ज्ञानम् = अवगमकम्, अस्ति = वर्त्तते, इति = एवम्, उक्तः = कथयित्वा इत्यर्थः । क्त्वार्थे क्तः प्रत्यययोगस्त्वार्षो ज्ञेयः । अदृष्टः = अलक्षितः = अन्तर्धानरूप इत्यर्थः, च = अपि, अभवत् = जातः ।

समासः—सर्वान् जानातीति सर्वज्ञः ।

व्याकरणम्—आह = ब्रू + लट् । अस्ति = अस् + लट् । उक्तः = वच् + क्तः । अभवत् = भू + लङ् ।

वाच्यान्तरम्—भार्गवेण ऊचे । प्रह्लादस्य इतोऽधिकेन ज्ञानेन भूयते ( विद्यते ) इत्युक्त्वा भार्गवेण अदृष्टेन अभूयत ।

सारार्थः—मया भवते यज्ज्ञानमुपदिष्टं, ततोऽप्यधिकं प्रह्लादोजानाति, अतस्तत्सकाशं गच्छ, स ते उपदेक्ष्यति, इत्युक्त्वाऽलक्षितोऽभूत् ।

भाषार्थः—इस से ज्यादे ज्ञानोपदेश प्रह्लाद ही जानते हैं, यह कह कर सर्वज्ञ शुक्र अलक्षित हो (विलाय) गये ॥२७॥

*स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
गत्वा †प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥२८॥

अन्वयः—ततः स मेधावी पाकशासनः, ब्राह्मणः भूत्वा प्रह्लादं गत्वा 'श्रेयः वेदितुं इच्छामि' इति प्रोवाच ।

व्याख्या—ततः = शुक्रकथनानन्तरम्, स = ज्ञानार्थी, मेधावी = धारणात्मकधीमान्, अतएवोपदेशग्रहणयोग्यः सूचितः, पाकशासनः = इन्द्रः, ब्राह्मणः = विप्रः, शिक्षादानयोग्य इत्यर्थः । ब्राह्मणस्य शिक्षायामनिवार्यत्वात् । भूत्वा = संभाव्य, आत्मानं ब्राह्मणवेषं निर्मायेत्यर्थः । प्रह्लादम् = एतन्नामकं निजविजयिनं, गत्वा = उपगम्य, अनेन ज्ञानशिक्षार्थमपमानं शिरसि निधाय येनकेनचित्प्रकारेण यस्मात्कस्माच्चिदपि

* 'स तत्र' इति वा पाठः । ( व्याख्या-तत्र = प्रह्लादस्थानगमनावसरे ) ।

† स्तुत्वा प्रोवाच इति वा पाठः । ( व्याख्या—स्तुत्वा = स्तुतिं कृत्वा, प्रशंस्येति भावः ) ।

जनादुपदेशग्रहणं कर्त्तव्यम्, तत्रेर्ष्या न कर्त्तव्या, यथा प्रह्लादपराजित एव ततो ज्ञानलाभार्थमिन्द्रो गतवानिति महन्निदर्शनम्। अतो नीतौ "अपमानं पुरस्कृत्य मानं त्यक्त्वा च दूरतः। स्वकार्यमुद्धरेद्धीमान् कार्यध्वंसो हि मूर्खता" इत्युक्तम्। भवद्भ्यः श्रेयः = कल्याणकरमुपदेशं, वेदितुम् = ज्ञातुम्, इच्छामि = अभिलषामि।

व्याकरणम्—भूत्वा = भू + क्त्वा। गत्वा = गम् + क्त्वा। प्रोवाच = प्र + वच् + लिट्। इच्छामि = इष् + लट्। वेदितुम् = विद् + तुमुन्।

वाच्यान्तरम्—पाकशासनेन प्रह्लादः ऊचे। मया श्रेयो वेदितुम् इष्यते।

कोपः—विडौजाः पाकशासन इत्यमरः।

सारार्थः—शुक्रादेशानुसारं विप्रवेषं विधाय प्रह्लादसमीपं गत्वा इन्द्र उक्तवान् यद्भवद्भ्यो ज्ञानोपदेशं लब्धुमागतोऽस्मीति।

भाषाऽर्थः—बाद उसके धारणा शक्तिवाले इन्द्रदेव ब्राह्मण के भेष धारण कर प्रह्लाद के पास गये, और उनसे कहे, कि आप से ज्ञान सीखने के लिये मैं आया हूँ ॥२८॥

**प्रह्लादस्त्वब्रवीत् विप्रं क्षणो*नास्ति द्विजर्षभ !।**
**त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥२९॥**

अन्वयः—प्रह्लादः तु, हे द्विजर्षभ ! त्रैलोक्यराज्यसक्तस्य मे क्षणो न अस्ति 'तथा च' ततः ते न उपदिशामि इति विप्रम्, अब्रवीत्।

व्याख्या—प्रह्लादः = प्रसिद्धः, तु = अपि, "हे द्विजर्षभ ! ब्राह्मणश्रेष्ठ ! त्रैलोक्यराज्यसक्तस्य = स्वर्गमर्त्यपाताललोकपालनभाराक्रान्तस्य, मे = मम, क्षणः = समयः, अल्पोऽपीति शेषः। न = नहि, अस्ति = विद्यते, तथा च, ततः = क्षणाभावात्, ते = त्वाम्, न उपदिशामि = ज्ञानं न कथयामि इति। उपदेशदाने तु शिक्षकस्य समयावश्यकता भवति, समयाभावात्कथमहं भवते उपदेशं दास्यामीति।

समासः—त्रैलोक्यस्य राज्यं त्रैलोक्यराज्यम्, तस्मिन् सक्त· आसक्तो यः स त्रैलोक्यराज्यसक्तस्तस्य त्रैलोक्यराज्यसक्तस्य।

व्याकरणम्—अब्रवीत् = ब्रू + लङ्। अस्ति = अस् + लट्। उपदिशामि = उप + दिश् + लट्।

* नास्ति द्विजोत्तम ! इति वा पाठः। (व्याख्या-द्विजोत्तम ! = ब्राह्मणश्रेष्ठ !)

वाच्यान्तरम्—प्रह्लादेन औच्यत। क्षणेन न भूयते (विद्यते) अतो-नोपदिश्यते मया।

कोषः—अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः। तास्तु त्रिंशत् क्षण इत्यमरः।

सारार्थः—त्रिभुवनराज्यपालनव्यग्रतया समयाभावात् उपदेश-दानेऽसमर्थोऽहम्, इति प्रह्लाद इन्द्रमवदत्।

भाषाऽर्थः—प्रह्लाद ने इन्द्र से कहा कि 'मुझे तीनों लोगों के राज काज के भार रहने से फुरसत नहीं मिलती, इसलिये आप को मैं उपदेश नहीं दे सकता ॥२९॥

**ब्राह्मणस्त्वब्रवीद्राजन्! यस्मिन् काले क्षणो भवेत्।**
**तदोपदेष्टुमिच्छामि *यदाचर्यमनुत्तमम् ॥ ३० ॥**

अन्वयः—तु ब्राह्मणः अब्रवीत्, 'यत्' हे राजन्! यस्मिन् काले उपदेष्टुम् क्षणः भवेत्। तदा अनुत्तमम्, आचर्यम्, यत्, 'तत्' इच्छामि।

व्याख्या—तु = पुनः, ब्राह्मणः = ब्राह्मणरूपधारी इन्द्रः, अब्रवीत् = अवदत्, प्रह्लादं प्रतीत्यर्थः। यत् हे राजन्! = महाराज प्रह्लाद! यस्मिन् काले = यस्मिन् समये, उपदेष्टुम् = उपदेशं दातुम्, भवतः, क्षणः = समयः, भवेत् = स्यात्, तदा = तदानीं, यत् अनुत्तमम् = सर्वोत्तमम्, आचर्यम् = आचरणीयम्, आचरितुं योग्यमित्यर्थः। तत् इच्छामि = ज्ञातुमिच्छामि। मम नायमभिप्रायोऽस्ति यत्स्वकार्यपातं कृत्वा मामुपदिश। किन्तु यदा ते अवकाशो भविष्यति, तदा कृपया-ऽवश्यं कथयिष्यसीति।

समासः—न उत्तमं विद्यते यतस्तदनुत्तमम्।

व्याकरणम्—अब्रवीत् = ब्रू + लङ्। भवेत् = भू + विधिलिङ्। उपदेष्टुम् = उप + दिश + तुमुन्। इच्छामि = इष् + लट्।

वाच्यान्तरम्—ब्राह्मणेन अकथ्यत। क्षणेन भूयेत। मया आचर्यम् इष्यते।

---

* यदि कार्यान्तरं भवेत् इति वा पाठः। (व्याख्या यदि = चेत्, कार्यान्तरम् = प्रारब्धकर्मावसानं, भवेत् = स्यात्)।

सारार्थः—ब्राह्मणस्वरूपधारिणा इन्द्रेणोक्तम् यत् 'हे महाराज ! नाहं भवतः कार्यपातं कृत्वा स्वार्थसाधनं कर्त्तुमिच्छामि, यदाऽवकाशः श्रीमतो भवेत्तदैवाहं शिक्षणीयः।

भाषाऽर्थः—ब्राह्मण के भेषधारी इन्द्र ने प्रह्लाद से कहा कि 'जब आपको कहने के लिये समय मिले, तब मुझे सबसे उत्तम आचार बतलाइयेगा॥ ३०॥

**ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः।**
**तथेत्युक्त्वा ❀ शुभे काले ज्ञानतत्वं ददौ तदा ॥३१॥**

अन्वयः—ततः राजा प्रह्लादः ब्रह्मवादिनः 'उपरि' प्रीतः 'भूत्वा-तदा, तथा 'अस्तु' इति उक्त्वा शुभे काले ज्ञानतत्त्वं ददौ।

व्याख्या—ततः = विप्ररूपिण इन्द्रस्य कथनश्रवणानन्तरम्, राजा = त्रैलोक्याधिपतिः, प्रह्लादः = एतन्नाम्ना विदितः, दैत्यराजः, ब्रह्मवादिनः = ब्रह्म ब्रह्म इत्येवं वदतीति तस्य ब्राह्मणस्येत्यर्थः। उपरि प्रीतः = सन्तुष्टः, भूत्वा तस्य धैर्यमवलोक्येति भावः। तदा = तस्मिन्नवसरे, तथा = अस्तु बाढ़म्, इति = एवम्, उक्त्वा = उदीर्य = उच्चार्येत्यर्थः। शुभे = अनध्यायरहिते, स्वाध्यायोचिते इत्यर्थः। काले = समये, ज्ञानतत्त्वम् = सूक्ष्मज्ञानम्, ज्ञानबीजमित्यर्थः। ददौ = दत्तवान्, विप्ररूपिणे इन्द्राय दिव्यं ज्ञानं ददावित्यर्थः।

समासः—ब्रह्म ब्रह्मतत्त्वं वेदितुं शीलमस्येति ब्रह्मवादी, तस्य ब्रह्मवादिनः। ज्ञानस्य तत्त्वम्, निदानरूपमिति ज्ञानतत्त्वम्।

व्याकरणम्—अभवत् = भू + लङ्। उक्त्वा = वच् + क्त्वा। ददौ = दा + लिट्।

वाच्यान्तरम्—राज्ञा प्रीतेन अभूयत। तेन ज्ञानतत्त्वं ददे।

सारार्थः—विप्रवेषवतो देवेन्द्रस्य सन्तोषकरणं ज्ञात्वाऽतीव सन्तुष्टो दैत्यराजः प्रह्लादः, अहमवश्यं ज्ञानं दास्यामीति तमुक्त्वा शुभावसरे तस्मै ज्ञानतत्त्वं दत्तवान्।

भाषाऽर्थः—उसके बाद राजा प्रह्लाद ने उस ब्राह्मण के रूप में रहते

❀ 'ददौ काले ज्ञानतत्वं द्विजे तदा' इति पाठः। (व्याख्या-तदा = तस्मिन्, काले = समये, विप्ररूपधरस्येन्द्रस्योपरि सन्तुष्टावसरे, द्विजे = विप्रे विप्रवेषधराय इन्द्राय इत्यर्थः। ज्ञानतत्त्वम् = श्रेयःसारं, ददौ)।

हुए इन्द्र से कहा कि 'वैसे ही कराड़ रहै, क्या हर्ज है' यह कह मौका पाने पर अच्छे मुहूर्त में उनको ज्ञान के सारांश उपदेश दिया ॥३१॥

**ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम्।**
**चकार सर्वभावेन ❀ यदस्य मनसेप्सितम् ॥३२॥**

अन्वयः—ब्राह्मणः, अपि यथान्यायं अनुत्तमाम्, गुरुवृत्तिं चकार। तथा च, अस्य मनसा, यत् ईप्सितम्, तदपि सर्वभावेन चकार।

व्याख्या—ब्राह्मणः = विप्रवेषधारी इन्द्रः, अपि = निश्चयेन, यथान्यायम् = यथोचितम्, अनुत्तमाम् = महोत्कृष्टाम्, गुरुवृत्तिम् = गुरुशुश्रूषाम्, चकार = कृतवान्, शिक्षार्थिन उचिता मन्वादिस्मृतिग्रन्थे यथा वृत्तिरुदिता तथेति भावः। तथा च अस्य = दैत्यराजस्य प्रह्लादस्य, मनसा = मानसेन, यत् ईप्सितम् = इच्छितम्, मनोरथमित्यर्थः। तत् सर्वमपि, सर्वभावेन = कायचित्तवचनश्रमेण, चकार = कृतवान्।

समासः—गुरोर्वृत्तिः शुश्रूषारूपा इति गुरुवृत्तिः तां गुरुवृत्तिम्। न उत्तमो यस्याः सा अनुत्तमा तां अनुत्तमाम्। सर्वे भावाः सन्ति यस्मिन् सः सर्वभावस्तेन सर्वभावेन।

व्याकरणम्—चकार = कृ + लिट्। ईप्सितम् = आप् + सन् + क्तः।

वाच्यान्तरम्—ब्राह्मणेनाऽपि गुरुवृत्तिः चक्रे।

सारार्थः—विप्रवेषधर इन्द्रोऽपि शास्त्रोक्तरीत्या गुरुरूपस्य प्रह्लादस्य कायेन मनसा वाचा कर्मणा सेवापूर्वकं मनोरथसिद्धिं च कृतवान्।

भाषाऽर्थः—ब्राह्मणभेषधारी इन्द्र ने भी नियमानुसार प्रह्लाद को अच्छी तरह से गुरुसेवा करके, हर तरह से उनके मनोरथ को पूरा किया ॥३२॥

**पृष्टश्च तेन बहुशः प्राप्तं † कथमनुत्तमम्।**
**त्रैलोक्यराज्यं धर्मज्ञ! कारणं तद्ब्रवीहि मे ॥३३॥**

---

❀ यद्यच्च मनसेच्छति इति वा पाठः। (व्याख्या—मनसा = चित्तेन, यत् यत्, इच्छति = अभिलषति, तत्तदित्यर्थः)।

† कथमरिन्दम! इति वा पाठः। (व्याख्या-अरिन्दम! = रिपुसूदन!)।

अन्वयः—हे धर्मज्ञ ! कथं, अनुत्तमम्, त्रैलोक्यराज्यम्, प्राप्तम्, तत् कारणम्, मे ब्रवीहि, इति तेन च बहुशः पृष्टः।

व्याख्या—हे धर्मज्ञ ! धर्मवेत्तः ! कथम् = केन उपायेन, अनुत्तमम् = अत्युत्कृष्टम्, त्रैलोक्यराज्यम् = भुवनत्रयसाम्राज्यम्, प्राप्तम् = लब्धम्, तत् = कारणम्, तस्य हेतुम्, मे = मम विप्रायेत्यर्थः, ब्रवीहि = कथय, इति तेन = इन्द्रेण, बहुशः = वारं वारम्, पृष्टः = अनुयुक्तः, मां कथय मां कथयेत्येवमाग्रहेण उक्तः।

व्याकरणम्—पृष्टः = प्रच्छ् + क्तः। प्राप्तम् = प्र + आप् + क्तः। ब्रवीहि = ब्रू + लोट्। आर्षोऽयं प्रयोगः। व्याकरणतो ब्रूहीत्यस्यैव साधुत्वात्।

वाच्यान्तरम्—कारणं त्वया उच्यताम्।

कोषः—हेतुर्ना कारणं बीजं निदानन्त्वादिकारणम्, इत्यमरः।

सारार्थः—कथं भवता भुवनत्रयसाम्राज्यमधिगतं तत्कारणं कृपया कथय कथयेति वारं वारं कपटविप्रवेषधारिणा देवनाथेन प्रह्लादः पृष्टः।

भाषाऽर्थः—आप कैसे दुर्लभ त्रैलोक्य राज्य पाये, इसका कारण मुझे बताइये, यह बार बार प्रह्लाद से इन्द्र ने पूछा ॥३३॥

**प्रह्लादोऽपि महाराज ! ब्राह्मणं वाक्यमब्रवीत्।**
**नासूयामि द्विजान् विप्र ! राजाऽस्मीति *कदाचन ॥**
**†वाक्यानि वदतां तेषां संयच्छामि वहामि च ॥३४॥**

अन्वयः—महाराज ! प्रह्लादः अपि, ब्राह्मणम्, वाक्यम्, अब्रवीत्, (यत्) हे विप्र ! 'अहं राजा अस्मि' इति कदाचन द्विजान् न असूयामि। वदतां तेषां वाक्यानि, संयच्छामि, वहामि च।

व्याख्या—धृतराष्ट्रः स्वात्मजं दुर्योधनं प्रति, तथाच भीष्मोऽपि युधिष्ठिरं प्रति वदति यत् हे महाराज ! प्रह्लादः = दैत्यराजः, प्रसिद्धविष्णुभक्त इत्यर्थः। अपि, ब्राह्मणम् = विप्रवेषधरमिन्द्रं प्रति, वाक्यम् वच-

* कथं च न इति वा पाठः। (व्याख्या—कथंचन = केनापि विधिना नहि)।

† काम्यानि इति वा पाठः। (व्याख्या—काम्यानि = कमनीयानि, सुकोमलानि)।

नम्, वक्ष्यमाणरूपमित्यर्थः। अब्रवीत् = उक्तवान्, यत् हे विप्र! ब्राह्मणः! कदाचन = कस्मिन्नपि समये, अहं तु राजा = आदेशकारकः, शासकः च, यूयमाज्ञापालकाः, दण्ड्याश्चेत्येवम्, द्विजान् = ब्राह्मणान्, न = नहि, असूयामि = न सदोषान् करवाणि। वदताम् = उक्तवतां, तेषाम् = ब्राह्मणानाम्, वाक्यानि = वचनानि, संयच्छामि = गृह्णामि, वहामि च = धारयामि, च = अपि, मनसेति शेषः। तेषामुपर्य्यतीव भक्तिर्विद्यते।

व्याकरणम्—अब्रवीत् = ब्रू + लङ्। असूयामि = नामधातोर्णिच् + लट्। अस्मि = अस् + लट्। संयच्छामि = सम् + यम् + लट्। वहामि = वह + लट्।

वाच्यान्तरम्—प्रह्लादेन वाक्यम् अोच्यत। मया न द्विजा असूयन्ते। तेषां वाक्यानि संयम्यन्ते-ऊह्यन्ते च।

सारार्थः—प्रह्लादो विप्रवेषवन्तमिन्द्रं प्रत्युवाच यत् 'हे ब्राह्मण! सदा ब्राह्मणान् संमानयामि, न कदापि, तेषां जातेऽप्यपराधे दोषोद्घाटनं करोमि, तथा च तेषां निन्दां न करोमि, तैर्यदुच्यते, तत् शिरसा गृह्णामि।

भाषार्थः—हे महाराज! तब प्रह्लाद ने ब्राह्मणभेषधारी इन्द्रसे कहा कि 'हे ब्राह्मण! मैं राजा हूँ, यह ब्राह्मणोंके ऊपर कभी दबाव नहीं डाला। और उन लोगोंके उपदेशको सब दिन शिर पर रक्खा ॥३४॥

**ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा।**
***ते मां काव्यपथे युक्तं शुश्रूषुमनसूयकम् ॥३५॥**
**धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम्।**
**समासिञ्चन्ति † शास्तारः क्षौद्रं मध्विव माक्षिकाः ॥३६॥**

अन्वयः—ते विस्रब्धाः प्रभाषन्ते, सदा मां संयच्छन्ति च, ते शास्तारः काव्यपथे युक्तम्, शुश्रूषुम्, अनसूयकम्, धर्मात्मानम्, जितक्रोधम्, नियतं संयतेन्द्रियम्, माम्, माक्षिकाः क्षौद्रं मधु इव समासिञ्चन्ति।

* 'तेषां कार्यपथे युक्तं शुश्रूषुमनहंकृतम्' इति वा पाठः। (व्याख्या—तेषां = विप्राणां, कार्यपथे = कृत्यवर्त्मनि, युक्तं = संलग्नम्, शुश्रूषुम् = सेवकम्, अनहंकृतम् = विनयवन्तम्, अनुद्धतमित्यर्थः!

† शास्त्रज्ञाः इति वा पाठः। (व्याख्या-शास्त्रज्ञाः = आगमज्ञातारः)।

व्याख्या—ते = द्विजाः, ब्राह्मणा इत्यर्थः, विस्रब्धाः = विश्वस्ताः, भूत्वा, प्रभाषन्ते = प्रवदन्ति, अवश्यमेव मद्वचनं प्रह्लादो मन्यते इति प्रतीता ब्राह्मणा मामुपदिशन्ति, नहि भयात्सङ्कोचमाचरन्ति, तथा मनोदुःखसंभवात्। तथा च सदा = नित्यम्, मां = प्रह्लादम्, संयच्छन्ति = नियच्छन्ति, यथा कुमार्गं प्रस्थितान् वाजिनो यन्ता नियच्छति, तथा कामक्रोधाहङ्कारादिकुमार्गगतं मां संनियच्छन्ति। शास्तारः = उपदेष्टारः, उपदेशका इत्यर्थः। काव्यपथे = शुक्रोपदिष्टनीतिमार्गे, युक्तम् = संलग्नम्, शुश्रूषुम् = सेवकम्, अनसूयकम् = प्रशंसकम्, अनिन्दकं वा, धर्मात्मानम् = धर्मनिरतम्, जितक्रोधम् = वशीकृतकोपम्, शान्तचेतसमित्यर्थः। नियतम् = ध्रुवम्, संयतेन्द्रियम् = वशीकृतेन्द्रियम्, माम् = प्रह्लादम्, माक्षिकाः = मधुमक्षिकाः, क्षौद्रम् = मधु इव, समासिञ्चन्ति = प्रसिञ्चन्ति, यथा मक्षिकाः स्वमधुनीडम् सततं नवनवपुष्परससेकेन मधुमयं कुर्वन्ति, तथैव ब्राह्मणा अपि मां सदा सदुपदेशेन शान्तं गुणनिलयं कुर्वन्ति इति भावः।

समासः—काव्यस्य शुक्रस्य पन्था इति काव्यपथस्तस्मिन् काव्यपथे। न असूया विद्यते यस्य स अनसूयकस्तमनसूयकम्। धर्मे आत्मा यस्य सः धर्मात्मा, तं धर्मात्मानम्। जितः क्रोधो येन असौ जितक्रोधस्तम्। संयतानि नियन्त्रितानि इन्द्रियाणि यस्य सः संयतेन्द्रियस्तं संयतेन्द्रियम्।

व्याकरणम्—प्रभाषन्ते = प्र + भाष् + लट्। संयच्छन्ति = सम् + यम् + लट्। समासिञ्चन्ति = सम् + आ + षिच् + लट्।

वाच्यान्तरम्—तैः विश्रब्धैः प्रभाष्यते। अहं तैः संयम्यते। तैश्चाहं समासिच्यते।

कोषः—शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविरित्यमरः।

सारार्थः—अस्मच्चित्तसारल्यं विदित्वा विश्वस्ताः ब्राह्मणाः सर्वदैव मां हितमुपदिशन्ति। तथा चाहमपि सर्वथा तेषां सेवायां वचनपालने च निरतो वर्त्ते।

भाषार्थः—वे ब्राह्मण सब मेरे पर विश्वास रख कर यथार्थ कथा का उपदेश करते हैं, बुरे कामों से रोकते हैं, शुक्र के बताये मार्ग में लगे हुए, सेवामें निरत, धर्मात्मा, शान्तचित्त, इन्द्रिय को वशमें रखनेवाले, मुझे वे ब्राह्मण लोग नये नये मीठे मीठे उपदेशों से

सन्तुष्ट करते रहते हैं, जैसे मधु मक्षिका सतत चारों ओर से फूलोंके रस ले ले आकर अपने छत्तेको सेचन करती हैं, वैसे ही ॥३५॥३६॥

सोऽहं वागग्रविद्यानां रसानामवलेहिता।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥३७॥

अन्वयः—वागग्रविद्यानां रसानाम्, अवलेहिता सः, अहम्, चन्द्रमाः नक्षत्राणि इव स्वजात्यान् अधितिष्ठामि।

व्याख्या—वागग्रविद्यानाम् = जिह्वाग्रविद्यमानविद्यावताम्, अभ्यस्तसकलशास्त्राणामित्यर्थः। ब्राह्मणानाम्, रसानाम् = उपदेशामृतरसानाम्, अवलेहिता = आस्वादयिता, सः = प्रसिद्धः प्रह्लादः अहम्, चन्द्रमाः = नक्षत्रनायकश्चन्द्रः, नक्षत्राणि = तारा इव, अर्थात् यथा चन्द्रः सकललघुतेजोवतां मध्ये प्रभावशाली वर्त्तते, तथैवाहमपि, स्वजात्यान् = दैतेयान् दानवानित्यर्थः। अधितिष्ठामि = अधिवर्त्ते, स्वजातीयेषु प्रधानोऽस्मीति।

समासः—वागग्रे जिह्वाग्रे विद्या विद्यते येषां ते वागग्रविद्यास्तेषां वागग्रविद्यानाम्। स्वस्य जात्याः स्वजात्यास्तान् स्वजात्यान्।

व्याकरणम्—अवलेहिता = अव + लिह + तृच्। अधितिष्ठामि = अधि + ष्ठा + लट्।

वाच्यान्तरम्—मया स्वजात्या अधिष्ठीयन्ते।

कोषः—नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम् इत्यमरः।
हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धव इत्यमरः।

सारार्थः—ब्राह्मणमुखनिःसृतामृतमास्वादयन्नहं यथा नक्षत्राणां मध्ये चन्द्रः प्रधानतया वर्त्तते, तथैव स्वजातिवर्गेषु प्रधानरूपोऽस्मीति।

भाषार्थः—सो मैं ब्राह्मणोंके अमृतरूप उपदेशको चाटता हुआ, जैसे ताराओं में चन्द्रमा प्रधान रूपसे हैं, वैसे मैं भी अपने जात पात में मुख्य ( मुखिया ) रूपसे रहता हूँ ॥३७॥

एतत् पृथिव्याममृतमेतच्चक्षुरनुत्तमम्।
यद्ब्राह्मणमुखे *वाक्यमेतच्छ्रुत्वा प्रवर्तते ॥३८॥

* हव्यमेतच्छ्रुत्वा इति वा पाठः। ( व्याख्या—हव्यम् = होमीयम्, भोज्यमित्यर्थः )।

अन्वयः—ब्राह्मणमुखे यत् वाक्यम्, 'तत्' एतत् पृथिव्याम्, अमृतम्। एतत् अनुत्तमम्, चक्षुः। एतत्, श्रुत्वा 'जनः' प्रवर्त्तते।

व्याख्या—ब्राह्मणमुखे = द्विजवदने, यत् वाक्यम् = वचनम्, ब्राह्मणमुखनिःसृतं वचनमित्यर्थः। तत् एतत् = इदम्, पृथिव्याम् = भूलोके, अमृतम् = सुधारसोपमम्। अर्थाद्विप्रवाक्यानुसारं ये चलन्ति संसारयात्रायां, ते कीर्त्तिशालिनः सदैवामरा इव जीवन्ति, कीर्त्तिर्यस्य स जीवतीत्युक्तत्वात्। तथा च एतत् = विप्रवचः, अनुत्तमम् = अत्युत्कृष्टं = दिव्यमित्यर्थः, चक्षुः = नेत्रम्, अस्तीति शेषः। ब्राह्मणकथोपदिष्टमार्गे व्रजन्तः प्रलयेऽपि न नरके पतन्ति, अत उक्तं युक्तियुक्तम्। एतत् = विप्रवचः, श्रुत्वा = आकर्ण्य, जनः प्रवर्त्तते = प्रचलति, अधुनाऽपि करालकलिकाले विप्रमुखनिःसृतग्रन्थानुसारमेव भाषान्तरे धर्मशास्त्रादिशासनपद्धतिः वर्त्तते। वस्तुतः ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहेति श्रुतिरपि तन्मतं द्रढयति।

समासः—ब्राह्मणस्य मुखं ब्राह्मणमुखं, तस्मिन् ब्राह्मणमुखे।

व्याकरणम्—श्रुत्वा = श्रु + क्त्वा। प्रवर्त्तते = प्र + वृत् + लट्।

वाच्यान्तरम्—जनैः प्रवृत्यते।

कोषः—पीयूषममृतं सुधेत्यमरः। नेत्रं दृङ्नयनं चक्षुर्दृष्टिर्लोचनमित्यपि कोशान्तरम्।

सारार्थः—ब्राह्मणस्य वचनमेवामृतं, दिव्यं चक्षुरपि, तद्वशादेवाधुनाऽपि जगच्चलति। तेन कल्याणाकांक्षिभिर्विप्रवचो ग्राह्यम्।

भाषाऽर्थः—इस मर्त्यलोक में ब्राह्मण ही के मुख में अमृत भरा है, जो मुख से निकलता है, वही अमृत है, वही दिव्य दूरदर्शी आँखें हैं। वही सुनकर संसार चलता है ॥३८॥

**एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम्।**
**तदा शुश्रूषितस्तेन दैत्येन्द्रो वाक्यमब्रवीत् ॥३९॥**

अन्वयः—प्रह्लादः 'एतावत् श्रेयः' इति ब्रह्मवादिनम्, आह। तदा तेन शुश्रूषितः, दैत्येन्द्रः, वाक्यम्, अब्रवीत्।

व्याख्या—प्रह्लादः = बलिदैत्यजनकः, एतावत् = विप्रवचः, एव श्रेयः = कल्याणम्, इति = इदम्, ब्रह्मवादिनम् = ब्राह्मणवेषधरमिन्द्रम्, प्रति, आह = उवाच। तदा = तस्मिन् अवसरे, तेन = विप्ररूप-

धरेण इन्द्रेण, शुश्रूषितः = सेवितः, दैत्येन्द्रः = दानवाधिपतिः, वाक्यम् = वचनम्, अब्रवीत् = अवदत् ।

समासः—दैत्यानामिन्द्रो दैत्येन्द्रः ।

व्याकरणम्—आह = ब्रू + लट् । शुश्रूषितः = श्रु + सन् + क्तः । अब्रवीत् = ब्रू + लङ् ।

वाच्यान्तरम्—प्रह्लादेन ब्रह्मवादी ऊचे । इन्द्रेण शुश्रूषितेन दैत्येन्द्रेण वाक्यम् औच्यत ।

सारार्थः—विप्रवच एवामृतमित्युक्तस्य प्रह्लादस्य यथाविधि सेवां कुर्वन्तमिन्द्रं प्रति स च वाक्यमुवाच ।

भाषाऽर्थः—इतने ही कल्याणकर विषय हैं, यह प्रह्लाद ने ब्राह्मण वेषधारी इन्द्र से कहा. पीछे वाद, उस ब्राह्मण से सेवा होने पर फिर वह प्रह्लाद ने ब्राह्मण से कहा ॥३९॥

**यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ! ।**
**वरं वृणीष्व, भद्रं ते प्रदाताऽस्मि न संशयः ॥४०॥**

अन्वयः—हे द्विजसत्तम ! ते यथावद् गुरुवृत्या प्रीतः अस्मि, वरं वृणीष्व, ते भद्रं प्रदाताऽस्मि 'अत्र' संशयः न 'अस्ति' ।

व्याख्या—हे द्विजसत्तम ! = विप्रवर !, ते = तव, यथावद् = यथोचितम् = धर्मशास्त्रानुसारम्, गुरुवृत्त्या = गुरुशुश्रूषया, प्रीतः = हर्षितः अस्मि, । तेन त्वं, वरं = इच्छितं वस्तु, वृणीष्व = प्रार्थयस्व, ते = तव, भद्रम् = कल्याणम्, श्रेयसमित्यर्थः । प्रदाताऽस्मि = दानायोद्यतोऽस्मीत्यत्र, संशयः = सन्देहः, न = नहि, अस्ति ।

समासः—गुरोर्वृत्तिर्गुरुवृत्तिस्तया गुरुवृत्त्या, द्विजेषु सत्तमः द्विजसत्तमस्तत्सम्बोधने हे द्विजसत्तम ! ।

व्याकरणम्—अस्मि = अस् + लट् । वृणीष्व = वृ + लोट् । अस्मि = अस् + लट् ।

वाच्यान्तरम्—प्रीतेन मया भूयते । त्वया वरो व्रियताम् । प्रदात्रा मया भूयते ।

कोषः—प्रीतः प्रसन्नो मुदितो हर्षितो हृष्टमानस इति कोशान्तरम् ।
यथाविधि यथान्यायं यथोक्तं च यथोचितमिति कोषान्तरम् । इच्छितं वरमिष्टं चेति कोशः ।

सारार्थः—प्रह्लादो विप्ररूपिणमिन्द्रमुवाच यत् 'हे ब्राह्मणश्रेष्ठ ! तव शुश्रूषया सर्वथा प्रसन्नोऽस्मि, तेन तुभ्यं ध्रुवं वरं दास्यामि, त्वं वरं प्रार्थयस्व इति ।

भाषार्थः—प्रह्लाद ने उस कपट ब्राह्मण भेष में रहते हुए इन्द्र से कहा कि तुम्हारी गुरुसेवा से तुम्हारे पर मैं प्रसन्न ( खुश ) होकर तुम्हें वर जरूर दूँगा, तुम वर माँगो ॥४०॥

**कृतमित्येव दैत्येन्द्रमुवाच ❀ स च वै द्विजः ।**
**प्रह्लादस्त्वब्रवीत् प्रीतो गृह्यतां वर इत्युत ॥४१॥**

अन्वयः—वै स च द्विजः 'कृतम्' इति एव दैत्येन्द्रम्, उवाच । ततः प्रीतः प्रह्लादः तु वरं गृह्यताम् इति अब्रवीत् ।

व्याख्या—वै = निश्चयेन, स च = पूर्वोक्तः, द्विजः = ब्राह्मणः, कृतम् = अलम् । अन्यवरेण व्यर्थम्, केवलम् शीलमेव ज्ञातुमिच्छामि । इत्येव दैत्येन्द्रम् = प्रह्लादम्, उवाच, अथ तच्छ्रुत्वा, प्रीतः = प्रसन्नः सन्, वरो गृह्यताम् = स्वीकुरु इति ब्राह्मणम्, अब्रूत = अवदत् ।

व्याकरणम्—उवाच = ब्रू + लिट् । अब्रवीत् = ब्रू + लङ् । गृह्यत म् = ग्रह् + कर्मणि लोट् ।

वाच्यान्तरम्—द्विजेन दैत्येन्द्र ऊचे । प्रीतेन प्रह्लादेन अोच्यत ।

सारार्थः—वरान्तरस्य प्रयोजनं मे नास्ति, केवलं शीलमेवेच्छामि । एवं ब्राह्मणेनोक्तो दैत्यराजः प्रह्लादः, पुनर्ब्राह्मणं प्रति वरो गृह्यतामित्युवाच

भाषार्थः—तब ब्राह्मण ने कहा कि 'और वर फजूल है' यह सुन प्रसन्न होकर प्रह्लाद ने फिर कहा कि 'जो चाहो सो मांग लो' ॥४१॥

ब्राह्मण उवाच । (ब्राह्मण बोले) ।

**यदि राजन् ! प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।**
**भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥४२॥**

अन्वयः—हे राजन् ! त्वं यदि प्रसन्नः असि । चेत् मम प्रियम् इच्छसि । 'तदा' भवतः, शीलं प्राप्तुम्, इच्छामि, एष मम वरः 'अस्ति' ।

---

❀ द्विजसत्तमः इति वा पाठः । (व्याख्या—द्विजसत्तमः = ब्राह्मणश्रेष्ठः, विप्रवेषधारी इन्द्र इत्यर्थः ।)

व्याख्या—हे राजन्! = त्रैलोक्यपालक!, त्वं = प्रह्लादः, यदि = चेत् 'ममोपरि' प्रसन्नः = हर्षितः, सन्तुष्ट इति भावः। असि, तथा च चेत् = यदि, वस्तुतः, मम = विप्रस्य, प्रियम् = अभीष्टम्, कर्त्तुम्, इच्छसि = अभिलषसि, तदा, ममाभीष्टं श्रूयताम्, अहं भवतः = प्रह्लादतः, शीलम् = सौजन्यम्, प्राप्तुम् = लब्धुम्, इच्छामि = अभिलषामि। एष = ईदृश एव, मम = विप्रस्य, वरः = कामः, मनोरथः, वा मनोगतोभाव इत्यर्थोऽस्ति।

व्याकरणम्—इच्छसि = इष् + लट्। इच्छामि = इष् + लट्। प्राप्तुम् = प्र + आप् + तुमुन्।

वाच्यान्तरम्—त्वया मम प्रियं इष्यते। मया भवतः शीलं प्राप्तुम् इष्यते।

सारार्थः—प्रह्लादस्य वचनं श्रुत्वा ब्राह्मणोऽवदत्। हे राजन्! यदि सत्यमेव ममोपरि भवान् प्रसन्नो भूत्वा वरं दातुमिच्छति, तदा शीलं कथय। इयमेव वरप्रार्थना मदीयेति।

भाषाऽर्थः—अगर हे महाराज! आप प्रसन्न (खुश) होकर मुझे वर देना चाहते हैं, तो मुझे शीलके लक्षण बताइये, यही मेरा वर है॥४२॥

**ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत्।**
**वरे प्रदिष्टे विप्रेण *नाल्पतेजाऽयमित्युत॥ ४३॥**

अन्वयः—ततः विप्रेण वरे प्रदिष्टे, दैत्येन्द्रः प्रीतः, तु, उत, अयम्, अल्पतेजाः न 'अस्ति' इति अस्य महत् भयम्, अभवत्।

व्याख्या—ततः = वरप्रार्थनाश्रवणानन्तरम्, विप्रेण = विप्ररूपधरेन्द्रेण, वरे = स्वज्ञेयविषये, प्रदिष्टे = प्रतिपादिते, सति, दैत्येन्द्रः = प्रह्लादः = प्रीतः = प्रसन्नो जातः। तु = किन्तु, उत = वितर्के, अयम् = वरप्रार्थको जनः, अल्पतेजाः = तेजोहीनः, सामान्यो न अस्ति, अर्थात् महाप्रभावशाली अतिप्रतिभावान् वा अस्ति, इति रूपम्, महत् = परमम् भयम् = शङ्कात्मकम्, अस्य = प्रह्लादस्य, मनसि, अभवत् = जातम्। वरार्थनमाकर्ण्य तस्याद्भुतं विचारं, धनादिभिन्नं ज्ञात्वाऽसाधारणोऽयं जन इति प्रह्लादस्य मानसे शङ्का जातेति।

* नाल्पचेताऽयमिति वा पाठः। (व्याख्या—अयम् = विप्रः, अल्पचेताः = स्वल्पमतिः, न = नहि, अस्तीति शेषः)।

९

समासः—अल्पं तेजोऽस्ति यस्य स अल्पतेजाः, न अल्पतेजा इति अनल्पतेजाः।

व्याकरणम्—अभवत् = भू + लङ्।

वाच्यान्तरम्—अस्य महता भयेन अभूयत।

सारार्थः—ब्राह्मणस्य वरार्थनं निशम्य, प्रसन्नः प्रह्लादः पश्चात्तस्यालौकिकीं प्रतिभां च विज्ञाय शङ्कितोऽपि जातः।

भाषाऽर्थः—उसके बाद ब्राह्मणके वरको सुन प्रसन्न होते हुए प्रह्लादको यह शङ्का (डर) समाई, कि 'यह ब्राह्मण कोई असाधारण तेजस्वी है' ॥४३॥

**एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा।**
**उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥४४॥**

अन्वयः—तदा विस्मितः स प्रह्लादः, एवम्, अस्तु इति प्राह। तु विप्राय वरम्, उपाकृत्य, दुःखान्वितः, अभवत्।

व्याख्या—तदा = शङ्काजातावसरे, विस्मितः = चकितः, भयभीत-इत्यर्थः। स प्रह्लादः = दैत्यराजः, अगत्या, एवम् = त्वदुक्तयनुसारमेव, अस्तु = भवतु, इति प्राह = अकथयत्। तु = किन्तु, विप्राय = ब्राह्मणवेषवते इन्द्राय, वरम् = इष्टम्, उपाकृत्य = समर्प्य, दुखान्वितः = परितापपीड़ितः, अभवत् = जात इति।

समासः—दुःखेन अन्वितः दुखान्वितः।

व्याकरणम्—अस्तु = अस् + लोट्। प्राह + प्र + ब्रू + लट् + आहादेशः। विस्मितः = वि + स्मिङ् + क्तः। उपाकृत्य = उप् + आङ् + कृ + ल्यप्। अभवत् = भू + लङ्।

वाच्यान्तरम्—तेन ऊचे। दुःखान्वितेन अभूयत।

सारार्थः—'तथाऽस्तु' इत्युक्त्वा प्रह्लादो विप्रस्यालौकिकीं प्रतिभां विलोक्य 'कोऽय'मिति शङ्कितः, तस्मै विप्राय वरं दत्वा क्षणं कर्त्तव्याकर्त्तव्यविमूढो जातः।

भाषाऽर्थः—'वैसे ही सही' यह कह कर, उनके विचार से अचरज में पड़, हारकर, आखिर उनको वर पूरा करके, कुछ देर तक प्रह्लाद खिन्न हुआ ॥ ४४ ॥

दत्ते वरे गते विप्रे चिन्ताऽऽसीन्महती तदा।
प्रह्लादस्य महाराज! निश्चयं न च जग्मिवान् ॥४५॥

अन्वयः—हे महाराज! वरे दत्ते 'सति', विप्रे गते 'सति' तदा प्रह्लादस्य महती, चिन्ता आसीत्, तथा च निश्चयं न जग्मिवान्।

व्याख्या—हे महाराज! दुर्योधन!, धृतराष्ट्रस्योक्तिरियम्, वरे = अभीष्टे, श्रेयःसाधनरूपे इत्यर्थः, दत्ते = अर्पिते सति, ततश्च विप्रे = ब्राह्मणवेषधरे इन्द्रे च गते सति, तदा = तत्रान्तरे, प्रह्लादस्य = एतन्नामकदैत्यविशेषस्य हृदये, महती = परमा, चिन्ता = आधिरूपा, आसीत् = कोऽयं परमप्रतिभावान् जनः? कुत आयातः? इति, प्रायोऽयं देवराजः किम्? चेत्स एव भवेत्तदाऽस्मन्मूलं तेन गृहीतम्, यद्बलादहं त्रैलोक्येश्वरो जातः। तत्कोऽयमासीत्?। इति प्रह्लादः निश्चयम् = निर्णयं, न जग्मिवान् = न गतवान्। निश्चितरूपेण तं न जानीतवान् इति।

व्याकरणम्—आसीत् = अस् + लङ्। जग्मिवान् = गम् + क्वसुः।

वाच्यान्तरम्—महत्या चिन्तया अभूयत। तेन निश्चयं न जगाम।

कोषः—वरः पूर्णाभिलाषे त्विति कोषः।

स्याच्चिन्ता स्मृतिराध्यानमित्यमरः।

सन्देहद्वापरौ चाथ समौ निर्णयनिश्चयौ इत्यमरः।

सारार्थः—यदा विप्रवेषधरायेन्द्राय प्रह्लादो वरं दत्तवान्, स च विप्रो वरमादाय गतवान्, तदा एकाकीदशायां तस्य प्रह्लादस्यातुला चिन्ताऽभूत्। तथा च परितो ज्ञानचक्षुषि प्रसारिते, निश्चयं न जात इति।

भाषार्थः—हे महाराज दुर्योधन! वर देने के बाद, ब्राह्मण को भी जाने पर, प्रह्लाद के दिल में भारी फिकिर आगयी, और विचारते विचारते भी उनकी शङ्का दूर न गयी ( न हटी ) ॥४५॥

तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति।
तेजो विग्रहवत्तात! शरीरमजहात्तदा ॥४६॥

अन्वयः—हे तात! तदा चिन्तयतः, तस्य तावत् छायाभूतम्, महाद्युति, विग्रहवत् तेजः शरीरम्, अजहात्।

व्याख्या—हे तात! = पुत्र! दुर्योधन! तदा = तस्मिन् चिन्ता-

जनके काले, चिन्तयतः = शोचतः, तस्य = प्रह्लादस्य, तावत् = तत्क्षणमेव, छायाभूतम् = छायारूपकम् , महाद्युति = अतिकान्तिशालि, विग्रहवत् = शरीरधरं, तेजः = ज्योतिः, प्रतिभेत्यर्थः, शरीरम् = प्रह्लादतनुम्, अजहात् = तत्याज।

समासः—छाया इव भूतं प्रवृत्तमिति छायाभूतम्। महती द्युतिः कान्तिर्यस्मिन् तत् महाद्युति।

व्याकरणम्—चिन्तयतः = चिति + णिच् + शतृ। अजहात् = ओहाक् + लङ्।

वाच्यान्तरम्—विग्रहवता तेजसा शरीरम् अहीयत।

कोषः—छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातप इत्यमरः।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रह इत्यमरः।
सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविरित्यमरः।

सारार्थः—यावत्स च प्रह्लादः क्षणं चिन्तितस्तावत् अतितेजोवत् शरीरी व तेजस्तद्देहाद्बहिर्ययौ।

भाषाऽर्थः—जब तक प्रह्लाद चिन्ता कर ही रहे थे कि एकाएक उनके शरीर से एक अत्यन्त तेजशाली, जैसे साक्षात् देह धारण कर तेज ही आया हो, वैसे ही प्रह्लाद के शरीर को छोड़ निकला ॥४६॥

**तमपृच्छ*न्महाकायं प्रह्लादः को भवानिति।**
**प्रत्याह†स तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥४७॥**

अन्वयः—प्रह्लादः, तं महाकायं 'प्रति' भवान् कः? इति अपृच्छत्। स च 'शीलः अस्मि, त्वया त्यक्तः अहं गच्छामि' इति प्रत्याह।

व्याख्या—प्रह्लादः = एतन्नाम्ना सुप्रसिद्धः, तम् = स्वशरीरान्निःसृतम्, महाकायम् = विशालदेहम्, पुरुषं प्रति 'भवान् = त्वम , कः = किं नामकः, इति अपृच्छत् = पृष्टवान्। स च = शरीरनिःसृतः, स = पुरुषः च = अपि, अहं, शीलः = सौजन्यरूपः, अस्मि, त्वया = प्रह्लादेन, त्यक्तः = विरहितः, सन् अहं गच्छामि, यस्मै त्वयाऽहं दत्तस्तं प्रति यामीति।

समासः—महान् विशालः, कायो देहो यस्य तम् महाकायम्।

* महाभागः, इति वा पाठः। (व्याख्या—महाभागः = परमसौभाग्यशीलः)।
† तं तु इति वा पाठः (व्याख्या—तं = प्रह्लादम्)।

व्याकरणम्—अपृच्छत् = प्रच्छ + लङ्। प्रत्याह = प्रति + ब्रू + लट्। आहादेशः। अस्मि = अस् + लट्। त्यक्तः = त्यज् + क्तः। गच्छामि = गम् + लट्।

वाच्यान्तरम्—प्रह्लादेन स महाकायोऽपृच्छ्यत। शीलोऽस्मीति तेन ऊचे। त्वया त्यक्तेन मया गम्यते।

सारार्थः—शरीरनिर्गतमतिविपुलवपुषं पुरुषं विलोक्य विस्मितोहतप्रतिभश्च प्रह्लादस्तं प्रति अवदत् को भवानस्ति? कुतश्चास्माच्छरीरान्निर्गतइति। श्रुत्वैतत्स निर्गतपुरुषः प्रह्लादं प्रति ददावुत्तरम् 'यदहं तु शीलोऽस्मि यतोऽहं त्वया तस्मै ब्राह्मणाय विसर्जितस्तस्मात्तमनुसरन् गच्छामि। इतः परं त्वं शीलहीनो भवेति।

भाषार्थः—प्रह्लादने अपने शरीर से निकले हुए बड़े एक पुरुष को देख पूछा कि 'तुम कौन हो?' यह सुन वह निकला हुआ जवान ने जवाब दिया कि 'मैं शील हूँ, तू ने मुझे छोड़ दिया, इस लिये अब तुम से जुदा होता हूँ' ॥४७॥

**तस्मिन् द्विजोत्तमे राजन्! वत्स्याम्यह*मनिन्दित!।**
**योऽसौ †विप्रत्वमागम्य त्वयि नित्यं समाहितः ॥४८॥**

अन्वयः—हे अनिन्दित! राजन्! यः, असौ विप्रत्वम्, आगम्य, नित्यं त्वयि समाहितः, तस्मिन् द्विजोत्तमे अहं वत्स्यामि।

व्याख्या—हे अनिन्दित! = प्रशंसनीय! सर्वश्लाघ्यगुणोपेत! इत्यर्थः। राजन् = प्रह्लाद!, यः = असौ, विप्रत्वम् = ब्राह्मणत्वम्, आगम्य = प्राप्य, ब्राह्मणरूपं धृत्वेति तात्पर्यम्। अनेन स ब्राह्मणः कश्चिद्ब्राह्मणेतरः, त्वत्तः शिक्षालाभार्थमेव विश्वासपात्रं विप्ररूपं धृतवान्, येन त्वं शिक्षादाने नान्यथाभावं करिष्यसि, इति भावः। त्वयि = भवति प्रह्लादे, नित्यं = अनवरतम्, समाहितः सन्निकटवर्त्ती, आसीत्, तस्मिन् द्विजोत्तमे = ब्राह्मणश्रेष्ठे, इन्द्रे इत्यर्थः, अहम्, इतो गत्वा वत्स्यामि = वासं करिष्यामीति।

---

* अरिन्दम! इति वा पाठः। (व्याख्या—अरिन्दम! = शत्रुसूदन!)।
† शिष्यत्वमिति वा पाठः। (व्याख्या—शिष्यत्वम् = अन्तेवासित्वम्)।

समासः—द्विजानामुत्तमः द्विजोत्तमस्तस्मिन् द्विजोत्तमे। न निन्दितः, अनिन्दितस्तत्सम्बोधने हे अनिन्दित !। विप्रस्य भावो विप्रत्वम्।

व्याकरणम्—वत्स्यामि = वस् + लृट्। आगम्य = आ + गम् + ल्यप्। समाहितः = सम् + आङ् + हा + क्तः।

वाच्यान्तरम्—मया द्विजोत्तमे वत्स्यते। त्वयि नित्यं सन्निहितेन येन अभूयत।

कोषः—विप्राण्डजद्विजा द्विजाः इत्यमरः। नित्यानवरताजस्रमित्यमरः।

सारार्थः—त्वया विसर्जितोऽहं तस्य निकटं यामि, येनाधुना गुरुवृत्तिः सम्यग्विहिता।

भाषार्थः—हे राजा प्रह्लाद ! जो अभी ब्राह्मण बन, तेरे पास हर वक्त दासो दास रहता था, उसी में रहने के लिये, मैं तुम से छोड़े जाने पर जाता हूँ ॥४८॥

इत्युक्त्वा❀सहितं तद्वै शक्रं चान्वाविशत् प्रभो !।
तस्मिन् तेजसि याते तु तादृग्रूपस्ततोऽपरः ॥४९॥
शरीरान्निर्गतस्तस्य को भवानिति †चाब्रवीत्।
धर्मं प्रह्लाद ! मां विद्धि यत्रासौ द्विजसत्तमः ॥५०॥
तत्र यास्यामि दैत्येन्द्र ! यतः शीलं ततो ह्यहम्।
ततोऽपरो महाराज ! प्रज्वलन्निव तेजसा ॥५१॥
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः।
को भवानिति पृष्टश्च तमाह स महाद्युतिः ॥५२॥
सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम्।
तस्मिन्ननुगते‡ सत्ये महान् वै पुरुषोऽपरः ॥५३॥

❀ अन्तर्हितम् इति वा पाठः। (व्याख्या—अन्तर्हितम् = अलक्षितम्)।
† सोऽब्रवीत् इति वा पाठः। (व्याख्या—सः = प्रह्लादः)।
‡ धर्मं पुरुषे पुरुषोऽपरः इति वा पाठः। (व्याख्या—तस्मिन् पुरुषे = सत्यात्मके इत्यर्थः। धर्मं, अनुगते = अनुयाते, सतीति शेषः, अपरः = अयन्-पुरुषः = पुरुषाकारः, वृत्तसंज्ञ इति भावः)।

निश्चक्राम ततस्तस्मात् पृष्टश्चाह *महाबलः ।
वृत्तं प्रह्लाद ! मां विद्धि यतः सत्यं ततो ह्यहम् ॥५४॥

अन्वयः—प्रभो ! दुर्योधन ! तत् च इति उक्त्वा सहितं शक्रं वै अन्वाविशत् । तस्मिन् तेजसि याते तु ततः तादृग्रूपः अपरः, तस्य शरीरात्, निःसृतः, 'भवान् कः ?' इति पृष्टः 'सन्' अब्रवीत्, हे प्रह्लाद ! दैत्येन्द्र ! मां धर्मं विद्धि । असौ द्विजसत्तमः, यत्र, तत्र यास्यामि, हि यतः शीलं, ततः अहम् । हे महाराज ! ततः तेजसा प्रज्वलन् इव अपरः महात्मनः तस्य प्रह्लादस्य शरीरात् निःसृतः, भवान् कः ? इति पृष्टः स महाद्युतिः, तं आह, हे असुरेन्द्र ! मां सत्यं विद्धि । अद्य अहं धर्मम्, अनु, प्रयास्ये । 'ततः' तस्मिन् सत्ये अनुगते वै महान् अपरः पुरुषः तस्मात् निश्चक्राम, ततः पृष्टः महाबलः च, "हे प्रह्लाद ! मां वृत्तं विद्धि यतः सत्यम्, ततः हि अहम्" इति आह ।

व्याख्या—हे प्रभो ! = शासक ! दुर्योधन ! तत् = शीलम्, ( कर्तृ ) तेजोरूपमित्यर्थः । च = अपि, इति = स्वपरिचयम्, उक्त्वा = कथयित्वा, सहितम् = हितेन सह वर्त्तमानम् = समङ्गलम्, वा 'स हि तं' एवं पृथक् वर्णत्रयच्छेदेन स = पुरुषः, हि निश्चयेन, तं, = गतवन्तं, इति । शक्रम् = इन्द्रम्, अन्वाविशत् = अन्तर्विवेश । इन्द्रशरीरे प्रविष्ट इत्यर्थः । अथ पश्चात्, तस्मिन् = तादृशे, तेजसि = तेजोरूपे शीले, याते = गते प्रह्लादशरीरात् गतवति सति । ततः = तदन्तरम्, तादृग्रूपः = तत्तुल्य-स्वरूपः, तेजोवानित्यर्थः । अपरः = अन्यः, द्वितीयः पुरुष इति भावः, तस्य = प्रह्लादस्य, शरीरात् = देहात्, निःसृतः = बहिर्भूतः, तं विलोक्य साश्चर्यं प्रह्लादेन "भवान् = त्वं कः = किंनामकः ?" इति पृष्टः = जिज्ञासितः, सन् अब्रवीत् = प्रह्लादं प्रति अवददित्यर्थः । यत्, हे प्रह्लाद ! दैत्येन्द्र ! = दैत्येश्वर !' मां = अपरिचितपुरुषविशेषम्, धर्मं सत्कीर्त्तिम्, विद्धि = जानीहि । तथा च असौ = अधुनैव यस्त्वत्तः शिक्षालाभा-यागत आसीत् स इत्यर्थः । द्विजसत्तमः = ब्राह्मणश्रेष्ठः, यत्र = यस्मिन् देशे वर्त्तते, तत्र = तस्मिन् स्थले, अहं यास्यामि = गच्छामि, हि = एव, कथमपि त्वया गृहीतस्त्वयि न स्थास्यामि, इत्यर्थ 'हि' एवार्थको ज्ञेयः ।", वा, हि = यतः, यस्मात्कारणात्, यतः = यत्र, शीलम् = सौजन्यं वर्त्तते

* महातपाः इति वा पाठः । (व्याख्या—महातपाः = उग्रानुष्ठाता ) ।

वा याति, तत्रैवाहमपि वर्त्ते, वा यामि। इत्युक्त्वा "मध्ये एव धृतराष्ट्रः स्वात्मजं सम्बोध्य वदति" । यत् हे महाराज ! दुर्योधन!, ततः=परिचयकथनगमनानन्तरम्, तेजसा=दीप्त्या, प्रज्वलन्= प्रकर्षेण चञ्चत्कान्तिः, अग्निरिव, अपरः=तृतीयः, पुरुष इति शेषः, महात्मनः=महाप्रभावस्य, प्रह्लादस्य = एतन्नामकदैत्यविशेषस्य, शरीरात्=देहात्, निःसृतः=वहिर्भूतः, गन्तुमुद्यतश्चेति तात्पर्यम्। परन्तु गन्तुमुद्यतं तमपि विस्मयोत्फुल्ललोचनः प्रह्लादः पृष्टवान्, "अहो भवान् कः ?, त्वं कोऽसीति ?, इति = एवं, प्रह्लादेन पृष्टः = अनुयुक्तः, महाद्युतिः = अतितेजोवान्, सः = तृतीयः पुरुषः। तं = प्रह्लादं, प्रति, आह = उवाच। हे असुरेन्द्र ! = दैत्येन्द्र !, 'मां',=तृतीयम् पुरुषम्, सत्यं = तथ्यम् , विद्धि = जानीहि, अद्य = अधुना, अहं = सत्यरूपः, धर्मं = सत्कृत्यम्, अनु प्रयास्ये = पृष्ठतः प्रयास्यामि, अर्थात् अहं धर्मस्यैव सहचरोऽस्मि, यतो धर्मस्ततः सत्यं वर्त्तते इति भावः। एवं ततः = तदनन्तरम्, तस्मिन् = तादृशे, सत्ये = ऋते, अनुगते = धर्मं प्रति पृष्ठतः प्रस्थिते सति, वै = निश्चयेन, महान् = विशालकायः, अपरः=चतुर्थपुरुषः, तस्मात् = प्रह्लाददेहात, निश्चक्राम = निर्गतः। ततः = निर्गमनानन्तरम् तमपि निःसृतं विलोक्यातीव चकितः, प्रह्लादेन पृष्टः = परिचयावगमार्थं जिज्ञासितः, महाबलः = विपुलवीर्यः च स चतुर्थः पुरुष उवाच 'हे प्रह्लाद ! मां = चतुर्थं पुरुषं, वृत्तम् = सदाचारम्, विद्धि = जानीहि। यस्मात् यतः = यत्र, सत्यम् = तथ्यम्, याति, ततः = तत्र, हि = एव, अहम् = वृत्तरूपोऽपि यामीति आह = अकथयत्। अर्थात् अहं सत्यानुचरः, सत्यन्तु धर्मानुचरः, धर्मस्तु = शीलानुचरः, अतः, शीलं यत्र वसति तत्रैव वयं धर्मसत्यवृत्तानि वसाम इति भावः। अर्थात् शीलधर्मसत्यवृत्तानि मिथः संबद्धानीति।

समासः—द्विजेषु सत्तमः द्विजसत्तमः तत्सम्बोधने हे द्विजसत्तम ! दैत्यानामिन्द्रो दैत्येन्द्रः, तत्सम्बोधने हे दैत्येन्द्र !, महाँश्चासौ राजा महाराजस्तत्सम्बोधने हे महाराज ! महानात्मा यस्य स महात्मा, तस्य महात्मनः। महती द्युतिर्महाद्युतिः। असुराणामिन्द्रः असुरेन्द्रः, तस्मै असुरेन्द्राय, महत् बलं यस्य सः महाबलः।

व्याकरणम्—उक्त्वा = वच् + क्त्वा। सहितं = सह + इतच्। अन्वाविशत् = अनु + आ + विश् + लङ्। अब्रवीत् = ब्र + लङ्।

विद्धि = विद् + लोट् । यास्यामि = या + लृट् । निःसृतः = निस् + सृ + क्तः । पृष्टः = प्रच्छ + क्तः । आह = ब्रू + लट् । आहादेशः । विद्धि = विद् + लोट् । प्रयास्ये = प्र + या + लृट् । निश्चक्राम = निस् + क्रम + लिट् । पृष्टः = प्रच्छ + क्तः । विद्धि = विद् + लोट् ।

वाच्यान्तरम्—तेन शीलेन शक्रोऽन्वविश्यत । स्वशरीरान्निर्गतो· धर्मः प्रह्लादेन औच्यत । त्वया अहं धर्मो विद्यताम् ( विद्यै ) । शरीरान्निःसृतेन पृष्टेन च सत्येन प्रह्लादः औच्यत । अहं सत्यो· ऽवियताम् । मया प्रयास्येते । वृत्तेन निश्चक्रमे । त्वया अहं वृत्तो· विद्यताम् ।

कोषः—वृत्तं पद्ये चरित्रे चेत्यमरः ।

असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा इत्यमरः ।

सारार्थः—प्रह्लाददेहान्निर्गते शीले, धर्मोऽपि तस्मान्निर्गतः सत्य· मपि बहिर्गतम्, सत्ये च निःसृते वृत्तमपि निःसृतमेवं शीलधर्मसत्य· वृत्तात्मकाश्चत्वारोऽपि इन्द्रदेहं गता इति । अतो यस्य शीलमस्ति तस्य धर्मादयस्त्रयोऽपि स्वयं भवन्ति, यस्य तु शीलमेव नास्ति तस्य वर्त्तमाना अपि धर्मसत्यवृत्तात्मका सहसा तस्मान्निर्गच्छन्तीति ।

भाषाऽर्थः—हे दुर्योधन ! राजन् ! शील ने यह कहकर प्रह्लाद को छोड़ इन्द्र के तरफ चला । बाद शील के जाने के, फिर वैसे ही तेजोवान् दूसरा निकल कर चला, कि प्रह्लाद ने पूछा 'भाई ! तुम कौन हो !' तब वह जवाब दिया, मैं धर्म हूँ, जहाँ वह ब्राह्मण गये, वहैं जाऊँगा, क्योंकि वहैं शील भी गया है, जहैं शील, वहैं मैं भी रहता, क्या करूं ? मैं बाधित होकर जाता हूँ । फिर धृतराष्ट्र अपने पुत्र दुर्योधन से कहा कि 'हे महाराज ! उसके बाद, तीसरे बड़े हट्टे कट्टे जवान को भी निकलते देख प्रह्लाद ने पूछा कि 'अरे भाई ! आप कौन हो !" तब उसने कहा कि राजन् ! दानवेन्द्र ! मुझे तो आप सत्य समझें, मैं धर्म के पीछे जाता हूँ, यह कह कर चला । उसके जाने के बाद फिर भी एक बड़ा बलिष्ठ चौथा पुरुष निकला, वह भी पूछने पर बताया कि 'मुझे 'वृत्त' याने सदाचार समझो, जहाँ सत्य रहता, वहैं मैं भी, इसीलिये मैं भी जाता हूँ । क्या करूं भाई ! मेरे सब साथी, चले गये, एकेले कैसे रहूँ ॥४९॥५०॥५१॥५२॥५३॥५४॥

**तस्मिन् गते* महाशब्दः शरीरात्तस्य निर्ययौ ।**
**पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ॥५५॥**

अन्वयः—तस्मिन् गते, तस्य शरीरात् महाशब्दः 'पुरुषः' निर्ययौ। पृष्टः च मां बलं विद्धि, यतः वृत्तं, ततः अहम् ।

व्याख्या—तस्मिन् = वृत्ते, सदाचारे इत्यर्थः । गते = निर्गते, तस्य = प्रह्लादस्य, शरीरात् = तनोः, देहादित्यर्थः । महाशब्दः = अतिदीर्घरवः पुरुषाकारः । निर्ययौ = निर्गतः । प्रह्लादेन पृष्टः = परिचयज्ञानाय जिज्ञासितः च स, आह = उवाच, यत् माम् , बलं = प्रभावम् , वीर्यं वा विद्धि । कुतस्त्वं निःसृत इत्याशंक्याह—यतः = यत्र, वृत्तम् = नित्यकर्म, तिष्ठति, ततः = तत्रैवाहमपि तिष्ठामि, त्वं तु नित्यकर्मच्युतोऽसि, अतस्त्वां मुञ्चामि इति भावः ।

समासः—महान् शब्दो यस्य सः महाशब्दः ।

व्याकरणम्—निर्ययौ = निर् + या + लिट् । पृष्टः = प्रच्छ + क्तः । विद्धि = विद् + लोट् । अपृच्छत् = प्रच्छ + लङ् । अब्रवीत् = ब्रू + लङ् ।

वाच्यान्तरम्—महाशब्देन निर्यये । अहं बलं विद्यताम् ।

कोषः—शब्दे निनादनिनदध्वनिध्वानरवस्वना इत्यमरः ।

सारार्थः—यदा वृत्तं तस्य देहान्निर्गतं तदैव बलमपि निःसृतम्, यतो—वृत्ताभावे बलं न क्षणमपि वर्त्तते ।

भावार्थः—उस ( सदाचार ) को जाने के बाद उस ( प्रह्लाद ) के शरीर से बल भी निकला। पूछने पर बताया कि 'मुझे बल समझो, जहाँ सदाचार रहता है, वहीं मैं भी रहता, वह तुमको छोड़ कर गया, इसी से मैं भी छोड़ता हूँ ॥५५॥

**इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप ! ।**
**ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ॥**
**तामपृच्छत् स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् ॥५६॥**

* महाश्वेता इति वा पाठः । ( व्याख्या-महाश्वेता = अतिधवलवर्णा, गौराङ्गीत्यर्थः ) ।

अन्वयः—हे नराधिप ! बलम् (कर्तृ) इति उक्त्वा यतः वृत्तं, तत्र प्रययौ। ततः प्रभामयी देवी तस्य शरीरात् निर्ययौ। स दैत्येन्द्रः ताम्, अपृच्छत्, सा एनं श्रीः इति अब्रवीत्।

व्याख्या—हे नराधिप ! = जनेश ! वा नरेश !, बलम् (कर्तृ) इति = स्वपरिचयम्, उक्त्वा = कथयित्वा, यतः = यत्र, वृत्तम् = नित्यकर्म, वर्त्तते, तत्र = तस्मिन् स्थले, प्रययौ = गतवान्। ततः = बलगमनानन्तरम्, प्रभामयी = कान्तिरूपा, तेजोरूपेति वा, देवी = देवता, तस्य = प्रह्लादस्य, शरीरात् = देहात्, निर्ययौ, ततः स दैत्येन्द्रः = प्रह्लादः, तां = कान्तिमयीं देवीं, अपृच्छत् = पृष्टवान्, का त्वमसीति। श्रुत्वैतत् सा = देवी, एनं = प्रह्लादम्, 'अहं' श्रीः = लक्ष्मीः। अस्मि।" इति अब्रवीत् = अवदत्।

समासः—नराणामधिपो नराधिपस्तत्सम्बोधने हे नराधिप !।

व्याकरणम्—उक्त्वा = वच् + क्त्वा। प्रययौ = प्र + या + लिट्। निर्ययौ = निर् + या + लिट्। अपृच्छत् = प्रच्छ + लङ्। अब्रवीत् = ब्रू + लङ्।

वाच्यान्तरम्—तेन प्रयये। ततः प्रभामय्या देव्या शरीरात् निर्ययै। दैत्येन्द्रेण सा अपृच्छ्यत। तया श्रिया एष औच्यत।

कोषः—स्युः प्रभारुग्रुचिस्त्विड् भा भाश्च विद्युतिदीप्तय इत्यमरः

सारार्थः—यत्र वृत्तं गतवान् तत्रैव बलेऽपि गतवति, एका तेजस्विनी देवी प्रह्लाददेहान्निःसृता। प्रह्लादेन पृष्टा अहं लक्ष्मीरिति तमुवाच।

भाषाऽर्थः— जहां वृत्त गया, वहीं बल को भी जाने के बाद एक बड़ी कान्तिमती देवी उस प्रह्लाद के शरीर से निकली। और पूछने पर अपना नाम लक्ष्मी बताई ॥५६॥

**उषिताऽस्मि ❀स्वयं वीर ! त्वयि सत्यपराक्रम !।**
**त्वया त्यक्ता गमिष्यामि, बलं ह्यनुगता ह्यहम् ॥५७॥**

अन्वयः—वीर ! सत्यपराक्रम ! त्वयि स्वयं उषिता अस्मि, त्वया त्यक्ता 'सती' गमिष्यामि, हि बलम्, हि अनुगता।

❀ सुखं नित्यमिति वा पाठः। (व्याख्या-सुखं = आनन्दपूर्वकम्, नित्यम् = सर्वदा)।

व्याख्या—हे वीर = शूर !, हे सत्यपराक्रम ! = अमोघविक्रम ! प्रह्लाद !, त्वयि = प्रह्लादे, स्वयम् = आत्मना, अकथिता = अप्रार्थिता, उषिता = निवसन्ती, अस्मि = तिष्ठामि, परन्तु त्वया = प्रह्लादेन, त्यक्ता = विरहिता, सती, गमिष्यामि = यास्यामि, हि = यतः, बलम्, वर्त्तते, हि = तत एव अहं = लक्ष्मीः, अनुगता = अनुप्रस्थिता, अस्मि ।

समासः—सत्यः पराक्रमो यस्य सः सत्यपराक्रमस्तत्सम्बोधने हे सत्यपराक्रम ! ।

व्याकरणम्—उषिता = वस् + क्तः + टाप् । अस्मि = अस् + लट् । त्यक्ता = त्यज् + क्तः + टाप् । गमिष्यामि = गम् + लृट् । अनुगता = अनु + गम् + क्तः + टाप् ।

वाच्यान्तरम्—त्वया त्यक्तया मया गमिष्यते ।

सारार्थः—यावत् बलं त्वयि स्थितमासीत्तावदहमपि स्थिता, अधुना तु गमिते बले, अहमपि तमनुयामि । एवं लक्ष्मीः प्रह्लादं प्रत्युवाच ।

भाषाऽर्थः—हे वीर! प्रह्लाद ! मैं खुद तेरे में इतने देर तक रहती थी, अब तेरे छोड़ने से मैं बल के पीछे जाऊंगी । क्यों कि जहँ बल रहता है, वहँ मैं भी रहती हूँ ॥५७॥

**ततो भयं प्रादुरासीत् प्रह्लादस्य महात्मनः ।**
***अपृच्छत् स ततो भूयः क्व यासि कमलालये ! ॥५८॥**

अन्वयः—ततः महात्मनः प्रह्लादस्य भयं प्रादुः आसीत्, ततः स हे कमलालये ! 'त्वं' क्व यासि 'इति' भूयः अपृच्छत् ।

व्याख्या—ततः = लक्ष्मीप्रस्थानानन्तरम्, महात्मनः = महानुभावस्य, प्रह्लादस्य = एतन्नाम्ना प्रसिद्धस्य दैत्यवरस्य, भयं = भीतिः, हृदये प्रादुरासीत् = आविर्बभूव । ततः = भयजातानन्तरम्, स = प्रह्लादः 'तां लक्ष्मीं प्रति अपृच्छत्' हे कमलालये ! लक्ष्मि !, त्वं क्व = कुत्र, अधुना, यासि = गच्छसि, इति भूयः = पुनः, अपृच्छत् । मां विहाय कस्य शरणं यासीति ।

* अपृच्छत च तां भूय इति वा पाठः । ( व्याख्या—ताम् = प्रभामयीं देवीम्, लक्ष्मीमित्यर्थः । अपृच्छत् ) ।

समासः—कमलमालयो यस्याः सा कमलालया, तत्सम्बोधने हे कमलालये !।

व्याकरणम्—प्रादुरासीत् = प्रादुर् + अस् + लङ् । अपृच्छत् = प्रच्छ् + लङ् । यासि = या + लट् ।

वाच्यान्तरम्—भयेन प्रादुरभूयत । ततस्तेन सा अपृच्छ्यत । त्वया क्व यास्यते ।

कोपः—लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया इत्यमरः ।

सारार्थः—लक्ष्मीमपि गच्छन्तीं विलोक्य प्रह्लादस्य मनसि महद्भयं संजातम्, निरस्तधैर्यस्त्वरितं तामुवाच भगवति! वृत्तबलादयस्तु गता एव, तेषां गमनेन किमप्याश्चर्यम् किन्तु त्वं मां परित्यज्य क्व यासि।

भाषाऽर्थः—वृत्त, बल, शील, आदिकों के चले जाने पर लक्ष्मी को भी जाती देखकर प्रह्लाद के हृदय में बड़ा भय हुआ, और घबड़ा कर पूछने लगे कि हे ! लक्ष्मि ! तू कहां जा रही है ॥ ५८ ॥

त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥५९॥

अन्वयः—त्वं हि सत्यव्रता, लोकस्य परमेश्वरी देवी 'असि'। असौ ब्राह्मणश्रेष्ठः च कः ? इति तत्त्वं वेदितुं इच्छामि ।

व्याख्या—त्वं = लक्ष्मीः, हि = तु, वा हि = निश्चयेन, सत्यव्रता = दृढनियमा, लोकस्य = संसारस्य, जगतः वा परमेश्वरी = अध्यक्षा मुख्या स्वामिनी, पालयित्री, शासका च वा, देवी = देवता, असि । असौ = एव, ब्राह्मणश्रेष्ठः = द्विजोत्तमः, च कः = इति तत्त्वम् = सारं, रहस्यमित्यर्थः । वेदितुं = ज्ञातुं = अवगन्तुम्, इच्छामि = अभिलषामि ।

समासः—सत्यं व्रतं यस्याः सा सत्यव्रता । परमा चासौ ईश्वरी परमेश्वरी, ब्राह्मणेषु श्रेष्ठः ब्राह्मणश्रेष्ठस्तत्सम्बुद्धौ हे ब्राह्मणश्रेष्ठ !।

व्याकरणम्—इच्छामि = इष् + लट् । वेदितुम् = विद् + तुमुन् ।

वाच्यान्तरम्—मया तत्त्वं वेदितुम् इष्यते ।

सारार्थः—त्वया स्वीयः परिचयो दत्तः । जानामि त्वामखिललोकेश्वरीं लक्ष्मीम् । परन्तु योऽसौ मत्सन्निधानेऽध्ययनायागतो विप्रवरः, यत्पृष्ठतोऽस्मद्देहात् शीलधर्मसत्यवृत्तबलादयो गताः, स च कः ?, इति मां तत्परिचयेनोत्कण्ठानिवृत्तिं कुरु इति ।

भाषाऽर्थः—तूँ तो बड़ी पतिव्रता, संसार की मलिकाइनि, देवी हो, तुझे मैं जानता हूँ, लेकिन वह ब्राह्मणों में श्रेष्ठ ब्राह्मण कौन था? जिसके पीछे मेरे शरीर से निकल निकल शील, धर्म, सत्य, वृत्त, बल, ये सब गए, तूँ भी चल दियी, सो उसका परिचय मुझे बता कर जाओ ॥ ५९ ॥

( लक्ष्मीरुवाच ) लक्ष्मी बोली ।

**स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः ।**
**त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥६०॥**

अन्वयः—हे प्रभो ! यः ब्रह्मचारी त्वत्तः च उपशिक्षितः स शक्र-एव 'आसीत्' । त्रैलोक्ये, ते यत् ऐश्वर्यं तत् तेन अपहृतम् ।

व्याख्या—हे प्रभो ! दैत्यराज ! 'शृणु' इति शेषः, यः ब्रह्मचारी = ब्रह्मचर्यनियमपालकः, जनः, त्वत्तः = भवतः, च, उपशिक्षितः = प्राप्तोपदेशः, यस्त्वयाऽध्यापित इति भावः । स शक्रः = इन्द्रः, एव = निश्चयेन, आसीत्, नान्यो जनस्तवैव विदितो विप्रतिपत्तीति । तेन = इन्द्रेण, त्रैलोक्ये = स्वर्गमर्त्यपातालेष्वपि, ते = तव प्रह्लादस्येत्यर्थः । यत् = यावत्, ऐश्वर्यम् = विभवः, तत् = सर्वं, तेन = इन्द्रेण, विप्रवेषधरेण अपहृतम् = कपटेन स्वायत्तीकृतमिति । नेतः परं तव त्रैलोक्यराज्यं विद्यते, यस्य पूर्वमासीत्तस्य हस्ते एव गतम् ।

व्याकरणम्—उपशिक्षितः = उप + शिक्ष + क्तः । अपहृतं अप + हृ + क्तः ।

वाच्यान्तरम्—स इन्द्रस्ते ऐश्वर्यम् अपहृतवान् ।

सारार्थः—योऽसौ ब्राह्मणस्त्वत्समीपे पठनायागतः सचेन्द्रः साक्षात् तेन च तव त्रैलोक्यैश्वर्यं गृहीतम् । त्वमधुना केवलं कथं कथमपि पातालखण्डस्यैव साधारणो नरेशोऽसि, अथ च, इन्द्रस्य करदोऽपि ।

भाषाऽर्थः—जो वह आपसे शिक्षा पाया, वह ब्रह्मचारी इन्द्र ही था, आपका त्रैलोक्य राज्य कपट से छीन ले गया ॥६०॥

**शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ ! निर्जिताः ।**
**तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ! ॥ ६१ ॥**

अन्वयः—हे धर्मज्ञ! हि त्वया शीलेन त्रयः लोकाः निर्जिताः। हे प्रभो! तत् सुरेन्द्रेण विज्ञाय, तव शीलं हृतम्।

व्याख्या—हे धर्मज्ञ! = प्रह्लाद!, हि = यतः, यस्मात्कारणादित्यर्थः। त्वया = भवता, शीलेन = सद्वृत्तिना, त्रयः = स्वर्गमर्त्यपातालाख्याः लोकाः = भुवनानि, लोकस्तु भुवने जने इत्यमरः। निर्जिताः = वशीकृताः, तस्मात् हे प्रभो! तत् = शीलम्, सुरेन्द्रेण = अमरनाथेन, इन्द्रेणेत्यर्थः। विज्ञाय = विचार्य, हृतम् = अपहृतम्, माययाऽत्मसात्कृतम्।

समासः—धर्मं जानातीति धर्मज्ञस्तत्सम्बोधने हे धर्मज्ञ! सुराणामिन्द्रः सुरेन्द्रस्तेन सुरेन्द्रेण।

व्याकरणम्—निर्जिताः = निर् + जि + क्तः। हृतम् = हृ + क्तः।

वाच्यान्तरम्—इन्द्रः शीलं हृतवान्।

सारार्थः—यस्मात्त्वया पूर्वं शीलबलेनैव त्रिभुवनं वशीकृतम् तत् ज्ञात्वा त्रिभुवनपतित्वाभिलाषिणा इन्द्रेण, त्वत्तः शिक्षितम्।

भाषाऽर्थः—हे धर्म को जाननेवाले! मालिक! जिस लिये आप सिर्फ शीलही से तीनों लोग जीते हैं, इस लिये यह जानकर इन्द्र ने उस शील को, आपसे सीख कर ले गया ॥६१॥

**धर्मः सत्यं तथा वृत्तं बलं चैव तथाप्यहम्।**
**शीलमूला महाप्राज्ञ! सदा नास्त्यत्र संशयः ॥६२॥**

अन्वयः—हे महाप्राज्ञ! धर्मः, सत्यं, तथा वृत्तं, बलं च एव, तथा अहम् अपि, 'एते वयं सर्वे' सदा शीलमूलाः स्मः, अत्र संशयः न अस्ति।

व्याख्या—हे महाप्राज्ञ! परमबुद्धिमन्! धर्मः = सत्कृत्यरूपः, वेदबोधितकर्त्तव्यताकः। सत्यं = सकलव्यवहारे मिथ्याशून्यत्वम्, तथा = तद्वत्, वृत्तम् = सदाचाररूपम् = स्मृतिप्रोक्तम्, बलं = विक्रमं च, एव = निश्चयेन, तथा = तद्वत्, अहम् = लक्ष्मीश्च, एते सर्वे वयं, सदा = सर्वदा, शीलमूलाः = शीलानुचराः, शीलानुगामिनः स्मः, यस्मिन् जने केवलं शीलमेव वर्त्तते, तत्र धर्मप्रभृतयो वयं स्वयं अनाहूता अपि गच्छाम इति भावः। अत्र संशयः = सन्देहः, न, अस्ति = विद्यते।

समासः—शीलम् मूलम् येषां ते शीलमूलाः। महती प्रज्ञा यस्य सः महाप्राज्ञस्तत्सम्बोधने हे महाप्राज्ञ !

व्याकरणम्—अस्ति = अस् + लट्।

वाच्यान्तरम्—धर्मादिमन्तरा नात्र मया एकाकिन्या भूयते (स्थीयते)।

सारार्थः—यः किल शीलशाली भवति, तस्मिन्नेव जने धर्मसत्यवृत्तबललक्ष्म्यश्च वर्त्तन्ते एव।

भाषाऽर्थः—हे बड़े समझदार ! महाराज ! धर्म, सत्य, और वृत्त, बल और मैं भी, ये सब हर वक्त शील ही के साथी हैं, इसमें जरा भी गड़बड़ नहीं ॥६२॥

भीष्म उवाच। (भीष्म बोले)।

**एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर !।**
**दुर्योधनस्तु पितरं भूय एवाब्रवीद्वचः* ॥६३॥**

अन्वयः—हे युधिष्ठिर ! एवं उक्त्वा श्रीः, तु गता, ते च सर्वे गताः। दुर्योधनः तु भूयः एव पितरं अब्रवीत्।

व्याख्या—हे युधिष्ठिर !, ज्येष्ठपाण्डव ! एवं = अमुना उपर्युक्तरूपेण उक्त्वा, श्रीः = लक्ष्मीः, गता = प्रस्थिता। ते = शीलधर्मसत्यवृत्तबलसंज्ञकाश्च, सर्वे गताः = चलिताः, ततः तु = दुर्योधनः = धृतराष्ट्रज्येष्ठतनूजः पितृवचनं सर्वं श्रुत्वा, भूयः = पुनः, एव = निश्चयेन, पितरं = जनकं धृतराष्ट्रं प्रति शीललक्षणज्ञानाय अब्रवीत् = अवदत्।

समासः—युधि तिष्ठतीति युधिष्ठिरस्तत्सम्बोधने हे युधिष्ठिर ! दुःखेन युध्यते इति दुर्योधनः।

व्याकरणम्—उक्त्वा = वच् + क्त्वा + टाप्। गता = गम् + क्तः + टाप्। अब्रवीत्। ब्रू + लङ्।

वाच्यान्तरम्—श्रिया गतम्। दुर्योधनेन पिता भूय प्रोच्यत।

सारार्थः—एवं स्वस्य इन्द्रस्य च परिचयं दत्वा लक्ष्मीशीलादयः सर्वे च इन्द्रं प्रति गताः। एतत् श्रुत्वा दुर्योधनः सोत्कण्ठो विशेषेण शीललक्षणज्ञानाय स्वपितरं पृष्टवान्।

* तदा इति वा पाठः। (व्याख्या—तदा = तस्मिन् समये, कथाश्रवणसमये)।

भाषाऽर्थः—हे युधिष्ठिर! इस तरह से लक्ष्मी अपना और इन्द्रका पहचान देकर सबके साथ चल गई। पीछे फिर दुर्योधन ने अपने पिता से पूछा कि महाराज, मैं उस शीलके तत्त्व को समझना चाहता हूँ (यह आगे के श्लोक में है) ॥६३॥

शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन!।
प्राप्यते च यथा शीलं तं चोपायं*वदस्व मे ॥६४॥

अन्वयः—हे कौरवनन्दन! शीलस्य तत्त्वं वेत्तुं इच्छामि। शीलं च यथा प्राप्यते, तम्, उपायं च मे वदस्व।

व्याख्या—हे कौरवनन्दन! = कुरुवंशीय! पितः!, शीलस्य = सत्स्वभावस्य, तत्त्वम् = सारलक्षणम्, वेत्तुम् = ज्ञातुम्, इच्छामि = अभिलषामि। शीलं किंलक्षणमिति मे वदेति भावः। तथा च 'शीलं सौजन्यम्, यथा = येन उपायेन, प्राप्यते = लभ्यते, तम् = तादृशम्, उपायं = प्रकारं, मे = मह्यम्, प्रह्लादाय, वद कथय।

समासः—कुरो राज्ञोऽपत्यं पुमान् कौरवः, कौरवस्य नन्दनः इति कौरवनन्दनस्तत्सम्बोधने हे कौरवनन्दन! वा कौरवाः कुरुदेशभवाः जनास्तान् नन्दयतीति कौरवनन्दनस्तत्सम्बोधने हे कौरवनन्दन!।

व्याकरणम्—इच्छामि = इष् + लट्। वेत्तुम् = विद् + तुमुन्। प्राप्यते = प्र + आप् + कर्मणि लट्। वदस्व = वद + लोट्। अत्राऽऽत्मनेपदस्त्वार्षः।

वाच्यान्तरम्—मया तत्त्वम् वेत्तुम् इष्यते। यथा शीलं प्राप्नोति, मे उपाय उद्यताम्।

सारार्थः—हे जनक! शीलस्य किं लक्षणम्, तथा च तत्कथं लभ्यते इति च कृपया कथयेति।

भाषाऽर्थः—हे पिताजी! शील के तत्त्व को मैं जानना चाहता हूँ, और जिससे वह पाया जाता है, सो उपाय भी मुझे कृपाकर बताइये ॥६४॥

धृतराष्ट्र उवाच (धृतराष्ट्र बोले)।

सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना।
संक्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर ॥६५॥

*ब्रवीहि मे इति वा पाठः। (व्याख्या—मे = मह्यम्, ब्रवीहि = कथय।)

अन्वयः—हे नरेश्वर ! पूर्वं महात्मना प्रह्लादेन सोपायं शीलम् उद्दिष्टम्। 'अधुना' संक्षेपेण शीलस्य प्राप्तिं शृणु।

व्याख्या—हे नरेश्वर ! जनेश ! राजन् ! पूर्वं = प्रथमम्, वा पूर्वस्मिन् समये, महात्मना = महाप्रभावशालिना, प्रह्लादेन = एतन्नाम्ना प्रसिद्धदैत्येन, सोपायम् = शीललाभप्रकारसहितं शीलम्, उद्दिष्टं = इन्द्राय, पाठितम्। तत् संक्षेपेण = सूक्ष्मरूपेण शीलस्य = सत्स्वभावस्य, प्राप्तिम् = लाभयुक्तिं, त्वं शृणु, मया कथ्यते इति शेषः।

समासः—उपायेन सहितः सोपायस्तं सोपायम्। महानात्मा यस्य स महात्मा, तेन महात्मना, नराणामीश्वरो नरेश्वरस्तत्सम्बोधने हे नरेश्वर !।

व्याकरणम्—शृणु = श्रु + लोट्।

वाच्यान्तरम्—शीलस्य प्राप्तिः श्रूयताम्।

सारार्थः—हे पुत्र दुर्योधन ! यत् पुरा प्रह्लादेन इन्द्रायोक्तं, तत्संक्षेपेण त्वां कथयामि, शृणु।

भाषाऽर्थः—हे राजन् दुर्योधन ! पहले प्रह्लाद ने इन्द्र से जो इस शील के लाभ के लिये उपाय बताया था, उसी को मुख्तसर से कहता हूँ, सुनो ॥६५॥

अथ शीललक्षणम्।

**अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।**
**अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥६६॥**

अन्वयः—सर्वभूतेषु कर्मणा, मनसा, गिरा अद्रोहः, अनुग्रहः च दानं, च, एतत् 'शीलम्' प्रशस्यते।

व्याख्या—सर्वभूतेषु = सकलप्राणिषु, कर्मणा = क्रियया, वा कार्येण, मनसा = चेतसा, वा मानसेन, गिरा = वचसा वा भाषया, अद्रोहः = द्रोहाभावः = अहिंसारूपव्यापारः, तथा च अनुग्रहः = अभ्युपगमः, दयादर्शनं, दानं = धनव्ययः, एतत् = इति, शीलं प्रशस्यते = उत्तमरूपेण कथ्यते।

समासः—न द्रोह अद्रोहः। सर्वाणि भूतानि सर्वभूतानि, तेषु सर्वभूतेषु।

व्याकरणम्—प्रशस्यते = प्र + शंस् + कर्मणि लट् ।

वाच्यान्तरम्—जना एतत् शीलं प्रशंसन्ति ।

कोषः—द्रोहो विरोधो वैरञ्चेति कोषः ।

चित्तं तु चतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः ।

अनुग्रहः कृपा घृणेति कोषः ।

सारार्थः—सर्वदा सर्वप्राणिनां कर्मणा मनसा वाचा हानिं न कुर्यात्, तथा च तेषामुपरि सदा दया रक्षणीया, दानञ्च दरिद्राय दातव्यमित्येव शीलं निगद्यते ।

भाषाऽर्थः—सब प्राणियों की, काम से, मन से, बाणी से भी हानि कभो न करना, और दया रखना, दान देना, इसी को शील कहते हैं ॥६६॥

यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत् कुर्यात्कथञ्चन ॥६७॥

अन्वयः—आत्मनः पौरुषं यत् कर्म अन्येषां हितं स्यात्, वा येन अपत्रपेत, तत् कथंचन न कुर्यात् ।

व्याख्या—आत्मनः = स्वस्य, पौरुषम् = पुरुषसम्बन्धि, वा नरोचितं, यत् कर्म = कार्यम्, अन्येषां = परेषाम्, हितं = कल्याणकरं, न स्यात् = न भवेत्, वा येन = यादृशेन, कर्मणा = कार्येण, अपत्रपेत = लज्जेत, तत् = तादृशं कर्म, कथंचन = कथमपि, कस्यामपि दशायां न कुर्यात् = न आचरेत् ।

व्याकरणम्—अपत्रपेत = अप् + त्रप् + विधिलिङ् । कुर्यात् = कृ + विधिलिङ् ।

वाच्यान्तरम्—कर्मणा पौरुषेण अपत्रप्येत । तत् न क्रियते ।

सारार्थः—तदेव कार्यं कुर्यात् येन लोकानां किमपि कल्याणं भवेत्, तथा लोकाः प्रसन्नाश्च येन भवेयुः । एतदपि संक्षेपेण शीललक्षणमुक्तम् ।

भाषाऽर्थः—जिससे पराये का कल्याण न हो, और जिससे लोग लज्जित हों, ऐसा कार्य नहीं करना चाहिए, यह भी शील ही है ॥६७॥

तत्तु कर्म तथा कुर्यात् येन श्लाघ्येत संसदि ।
शीलं समासेनैतत्ते कथितं कुरुसत्तम ! ॥६८॥

अन्वयः—येन संसदि श्लाघ्येत, तत् तु कर्म तथा कुर्यात्। हे कुरुसत्तम! समासेन एतत् शीलम् ते कथितम्।

व्याख्या—येन = यादृशेन, कर्मणा, संसदि = सभायाम्, श्लाघ्येत प्रशंस्येत, तत्, तु कर्म = कार्यं, तथा = तद्वत्, कुर्यात् = समाचरेत्। हे कुरुसत्तम != कौरवप्रधान! समासेन = संक्षेपेण, एतत् = इदं, शीलम्, ते = तव तुभ्यम्, कथितम् = प्रतिपादितम्।

व्याकरणम्—कुर्यात् = कृ + विधिलिङ्। श्लाघ्येत = श्लाघ् + कर्मणि लिङ्। कथितम् = कथ् + क्तः।

वाच्यान्तरम्—तथा कर्म क्रियेत।

सारार्थः—येन कर्मणा जनानां प्रशंस्यो भवेत्, तत् विधेयमिति संक्षेपेण शीललक्षणम्।

भाषार्थः—जिस काम काज से दश आदमियों में यश, प्रशंसा होवे, ऐसा काम करना चाहिये, सो हे कुरुकुलमुख्य! यही मुख्तसर 'शील' तुमसे मैं ने कहा ॥६८॥

यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित्।
न भुञ्जते चिरं तात! समूलाश्च*न सन्ति ते ॥६९॥

अन्वयः—हे तात! नृपते! यद्यपि क्वचित् अशीला अपि लोकाः श्रियं प्राप्नुवन्ति, परन्तु ते चिरं तां न भुञ्जते, तथा च समूलाः न सन्ति।

व्याख्या—हे तात != प्रिय!, नृपते = राजन्! यद्यपि =, क्वचित् = कुत्रापि, अशीलाः = दुःशीलाः अपि लोकाः, श्रियं = लक्ष्मीं, प्राप्नुवन्ति = लभन्ते, परन्तु, ते = दुःशीलाः, चिरं = दीर्घकालम्, लब्ध्वाऽपि, ताम् = श्रियं, न भुञ्जते = भोगं कुर्वन्ति, अथ च समूलाः, ते, न सन्ति = न भवन्ति, सर्वंशस्ते विलीना भवन्तीत्यर्थः। यथा रावणादयो राजान उदाहरणम्।

समासः—न विद्यते शीलं येषां ते अशीलाः।

व्याकरणम्—प्राप्नुवन्ति = प्र + आप् + लट्। भुञ्जते = भुज् + लट्। सन्ति = अस् + लट्।

* पतन्ति ते इति वा पाठः। (व्याख्या—ते = अशीला राजान इत्यर्थः। पतन्ति = स्वस्थानाद्भ्रश्यन्ति)।

वाच्यान्तरम्—श्रियः प्राप्यन्ते । चिरं न भुज्यन्ते ।

सारार्थः—प्रथमन्तु दुःशीलाः लक्ष्मीं लभन्ते एव नहि, अयं मुख्यः पक्षः । अथवा, दैवात्कश्चित् यदि लभन्ते, तदा दीर्घकालं न भोगं कुर्वन्ति, तथा च सवंशाः प्रलयं सर्वे गमिष्यन्ति दुराशयाः, एवं तेषां गतिर्भवति ।

भाषाऽर्थः—यद्यपि शीलहीन जन ( विना शील के जन ) लक्ष्मी को पाता ही नहीं, अगर पाता भी कहैं, तो देर तक लक्ष्मी का भोग नहीं कर सकता, वल्के कुल मूल मिल कर नाश होता है ॥६९॥

धृतराष्ट्र उवाच ( धृतराष्ट्र बोले ) ।

**एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक ! ।**
**यदीच्छसि श्रियं तात ! सुविशिष्टां युधिष्ठिरात् ॥७०॥**

अन्वयः—हे पुत्रक ! हे तात ! यदि युधिष्ठिरात् सुविशिष्टां श्रियं इच्छसि, तदा तत्त्वेन एतत् विदित्वा शीलवान् भव ।

व्याख्या—हे पुत्रक ! हे तात = प्रिय ! यदि = चेत्, युधिष्ठिरात् = ज्येष्ठपाण्डवात्, सुविशिष्टाम् = समधिकाम्, श्रियं = सम्पत्तिम्, इच्छसि = अभिलषसि, तदा तत्त्वेन = यथार्थतया, एतत् = उक्तपूर्वं शीललक्षणम्, विदित्वा = ज्ञात्वा, शीलवान् = शीलसंपन्नो भव ।

व्याकरणम्—विदित्वा = विद् + क्त्वा । भव = भू + लोट् । इच्छसि = इष् + लट् । सुविशिष्टाम् = सु + वि + शास् + क्तः + टाप् ।

वाच्यान्तरम्—शीलवता भूयताम् । यदि श्रियः इष्यन्ते ।

सारार्थः—यदि चित्ते ते, युधिष्ठिरादधिकैश्वर्यलाभाशया चिन्ता विद्यते, तदा शीलवान् भवेति ।

भाषाऽर्थः—हे पुत्र ! दुर्योधन ! अगर तुम्हें युधिष्ठिर से ज्यादे सम्पत्ति की इच्छा होती है, तो जो मैंने बताया, उसको ठीक ठीक सीख कर शीलवान् बनो ॥७०॥

**एतत् कथितवान् पुत्रे धृतराष्ट्रो*नराधिपः ।**
**एतत् कुरुष्व कौन्तेय ! ततः प्राप्स्यसि तत्फलम् ॥७१॥**

* महीपतिरिति वा पाठः । (व्याख्या—महीपतिः = भूपतिः, मह्याः पृथिव्याः पतिरधिपतिरिति) ।

अन्वयः—नराधिपः धृतराष्ट्रः, पुत्रे एतत् कथितवान्। तत् हे कौन्तेय! एतत् कुरुष्व, ततः तत्फलं प्राप्स्यसि।

व्याख्या—नराधिपः = नरेशः, धृतराष्ट्रः = एतन्नामकः, दुर्योधन-पिता, पुत्रे = दुर्योधने, एतत् उक्तपूर्वं सर्वं कथितवान् = उक्तवान्। तस्मात् हे कौन्तेय! = युधिष्ठिर! एतत् = शीलं, कुरुष्व = आचर, ततः तत्फलम् = शीलशिक्षणरक्षणपरिणामं, प्राप्स्यसि = लप्स्यसे।

समासः—नराणामधिपः नराधिपः। कुन्त्या अपत्यं पुमान् कौन्तेयस्तत्सम्बोधने हे कौन्तेय!।

व्याकरणम्— कथितवान् = कथ् + क्तवतुः। कुरुष्व = कृ + लोट्। प्राप्स्यसि = प्र + आप् + लृट्।

वाच्यान्तरम्—त्वया एतत् क्रियताम्। तत् फलं प्राप्स्यते।

सारार्थः—धृतराष्ट्रस्तु दुर्योधनाय एतदेव शीललक्षणं उक्तवान्। हे युधिष्ठिर! एतत् त्वमपि विदित्वा शीलरक्षणं कुरु। ततस्तु तदलौकिकं फलं लप्स्यसीति।

भाषाऽर्थः—अपने पुत्र से धृतराष्ट्र ने यह सब कहा। सो हे युधिष्ठिर! तुम भी यह करो, इस का फल जरूर पावोगे। यह भीष्म पितामह ने युधिष्ठिर से कहा ॥७१॥

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥१२४॥

इति मिथिलादेशान्तर्गतचयनपुरग्रामनिवासिना मिश्रोपनाम्ना श्रीगङ्गाधरशर्मणा विहिता भारतीयशीलनिरूपणाध्यायस्य सुधाख्यव्याख्या समाप्तिमगात्।

# अथ महाभारतीयशीलनिरूपणाध्यायतः शिक्षाग्रहणम् ।



(१) सन्देह उपस्थिते विशेषज्ञः शत्रुरपि प्रष्टव्यः, यथेन्द्रेण भृगुव प्रह्लादः ।

(२) प्रबलोऽपि रिपुरुपायतत्परेण पराजितो भवत्येव, यथेन्द्रेण प्रह्लादः ।

(३) उपस्थिते सन्देहे तद्विषयकः पूर्वापरेतिहासः स्मर्त्तव्यस्तेन तु स्वयं सन्देहनिवृत्तिर्भवति ।

(४) परेषामुन्नतिं दृष्ट्वा सज्जना मोदन्ते, दुर्जनाः खिद्यन्ति ।

(५) कस्यापि जनस्य ये ये चान्ये शत्रवः स्युस्तेषां मिथो मित्रत्व-व्यवहाराभावेऽपि सहजा प्रीतिरुत्पद्यते ।

(६) दुष्टः समृद्धिसम्पन्नोऽपि सदैवासन्तुष्ट इवालक्ष्यते । यथा दुर्योधनः ।

(७) परेषामुन्नतिमवलोक्य महोन्नतिशीलोऽपि सङ्कुचितचित्तः खि-द्यति, यथा दुर्योधनः ।

(८) ये धर्मात्मानः शीलशालिनो जनाः सन्ति, तान् प्रति स्वयं समु-त्सुका कामिनीव लक्ष्मीर्गच्छति ।

(९) गुणज्ञचर्चावसरे स्वशत्रुरपि यदि स्वस्माद्विशेषगुणवान् भवेत् तदा स चापि वर्णनीय एव । यथा गुरुणेन्द्राय शुक्रस्योत्कर्षं कथितम् ।

(१०) नीचजात्युत्पन्नोऽपि चेदात्मनो विशेषज्ञस्तदा निःसंकोचं तत्स-मीपं गत्वा ततो गुणाः शिक्षणीयाः । यथा प्रह्लादनिकटे इन्द्रो-गत्वा विद्यां लब्धवान् ।

(११) येन रूपेण, येन स्वभावेन, येनोपचारेण शिक्षकस्य दया श्रद्धा चोत्पद्यते, तथैव कर्त्तव्यम्, यथा विप्रवेषेण शिष्यभावेन विप्रा-नुकूलस्य प्रह्लादस्य निकटे देवेन्द्रो गत्वा विद्यामाप्तवान् ।

(१२) शिक्षकस्य ( गुरोः ) यदैवावकाशः, यदैव सुस्थिरं चित्तं मुदितञ्च, तदैव तत्समीपं गत्वा स्वजिज्ञासां निवेदयेत्। नहि तस्य स्वव्यग्रतया कार्यपातं कुर्यात्। एवं कृते स्थिरधीः सन्तुष्टश्च गुरुर्हृदयमुद्घाट्य शिक्षयति।

(१३) यथा शुश्रूषवे शिष्याय गुरुर्विद्यां ददाति, नहि तथा धनदायापि।

(१४) विप्रसेवानिरतं तद्वाक्यकारकमनिन्दकं धर्मात्मानं जितक्रोधं जितेन्द्रियं जनं स्वयं श्रीरुपैति।

(१५) गुरुं सन्तोष्य लब्धा विद्या सफला भवति, नान्यथा सफलेति।

(१६) अन्यो यत्करोति, तत्करोतु, स्वयमपकारप्रतीकारं न कुर्यात्।

(१७) यत्कर्म परेषां कल्याणकरं न, तत्स्वोपकारकारकमपि न कर्तव्यम्।

(१८) येन क्रियमाणेन जनसंसदि प्रशंसा स्यात् तदवश्यं कार्यम्।

(१९) यत्रैव शीलं ( सच्चरित्रम् ) वर्त्तते, तत्रैव सत्यवृत्तधर्मादयोऽपि प्रवर्त्तन्ते।

(२०) स्नेहपरवशेनापि धर्मस्यैवोपदेशो दातव्यः, यथा धृतराष्ट्रो दुर्योधनाय।

(२१) अनाचारेण परपीड़या वा सञ्चितमपि धनं क्लेशपरिणामायैव।

(२२) यदि तत्काले सदाचारेण सत्सङ्गेन च हानिरपि जायते, तथापि, तस्मान्न विचलितो भवेत्। नियतमेव कदापि सदाचारस्य फलं शर्म लभेत् एवेति।

इति।



# अथ सटीकमूलरामायणे प्रश्नाः ।

(१) दशरथस्य राजधानी कासीदिति सप्रमाणं प्रदर्श्यताम् ।

(२) दशरथस्य कियत्यः स्त्रिय आसन्, तासु का ज्येष्ठा, का च कनिष्ठा ?

(३) दशरथस्य कति पुत्रास्तेषु जन्मनः पूर्वापरक्रमः कीदृशः ?

(४) कदा दशरथेन कैकेय्यै वरौ दत्तौ ?

(५) सीतारामलक्ष्मणानां पृथक् पृथक् प्रकृतिपरिचयं सप्रमाणं प्रदर्शय ।

(६) रामराज्योद्योगे भरतः कथं नाहूतो दशरथेन ?

(७) कस्मिन् देशे भरतस्य मातामहराजधानी आसीत् ? तथा च किं नामासीत् ?

(८) विश्वामित्रस्याश्रमः कुत्रासी त्कथं च तेन निजाश्रमे समानीतौ रामलक्ष्मणौ ?

(९) संक्षेपेण रामस्य रूपगुणवर्णनं क्रियताम् ।

(१०) रावणो मारीचमेव कथं साहाय्यार्थं वरयामास ?

(११) खरदूषणादिभिर्लङ्केश्वरस्य कः सम्बन्धः ?

(१२) बलिनमपि बालिनं विहाय कथं सुग्रीवेण सह रामो मैत्रीं कृतवान् इत्यत्र को हेतुः ?

(१३) कुत्रापि कैकेयी यवीयसी माता रामस्य, कुत्रापि 'मध्यमाऽम्बा' इति मिथो विरुद्धोपचारस्य कथं सङ्गतिः ?

(१४) भरतः कुत्र स्थितं रामं प्रत्यानयनाय गतवान् ?

(१५) रामलक्ष्मणप्रकृत्योः को भेदः ?

(१६) रामाय वनवासं दत्वा कैकेय्या जगत उपकारोऽपकारो-वाऽऽकारि तत्सयुक्तिकं प्रदर्श्यताम् ?

(१७) सीतोत्पत्तिः कथमभूत्कथं च सीतेति नाम, तथा च चेज्जनकस्यौरसी सुता सा नासीत्तदा कस्येति लिख्यताम् ।

(१८) रावणेन प्रेरितो मारीचः केन रूपेण रामदृष्टिगोचरं गतवान् ?

(१९) गङ्गाया उत्तरे वा सौम्ये तटे भरद्वाजस्याश्रम इति तत्रत्यवाक्य-मुद्धृत्य लिख्यताम् ।

(२०) दण्डकारण्ये रामेण के के मुनयोऽवलोकिताः, तथा च तेषु कतमेन किमपि दत्तं न वा ?
(२१) भारद्वाजेन वासार्थमुपदिष्टमपि चित्रकूटं कथं त्यक्तवान् रामः?
(२२) रामलक्ष्मणौ यदा खरादीनां युद्धे गतौ, तदा सीता क्वासीत् ?
(२३) कबन्धः पूर्वजन्मनि कः, कथं कबन्धत्वमाप्तं तेन, एतद्विषये काऽपि पौराणिकी वार्त्ता लेख्या ?
(२४) कुत्र हनुमता रामः संगतः, तथा च हनुमान् कृष्णमुखरक्तमुखयोर्वानरजात्योः कः आसीत् ?
(२५) किष्किन्धास्थं सुग्रीवं कथं न बाधते स्म बालिः ?
(२६) कथं बालिसुग्रीवयोर्विरोध उत्पन्नः ?
(२७) सीता समुद्रस्य दक्षिणतटस्थायां लङ्कायामस्ति, तत्कथमवगतं हनुमता ?
(२८) सागरस्य विस्तृतिः कियती आसीत्तत्समूलं लिख्यताम् ?
(२९) लङ्कायां हनुमता कुत्र सीताऽवलोकिता ?
(३०) रामसुग्रीवाभ्यामनुपदिष्टमपि लङ्कादहनं कथमकारि हनुमता ?
(३१) सागरे सेतुः केनाकारि ?
(३२) कथं सीताया वह्निप्रवेशो रामेण कारितः ?
(३३) रामः कीदृशेन रथेन लङ्कातो निवृत्तः ?
(३४) रामे राज्यं प्रशासति प्रजाः कीदृशा आसन् ?
(३५) रामेण कियत्कालं राज्यं कृतं, तत्सप्रमाणं लिख्यताम्।
(३६) रामायणं चातुर्वर्ण्यपठनयोग्यं न वा ?
(३७) रामेण रावणं हत्वा लङ्काराज्यं कस्मै दत्तम् ?
(३८) तदानीं स्त्रीवर्गे युद्धशिक्षा प्रचलिताऽऽसीन्नवेति सप्रमाणमुल्लिख्यताम्।
(३९) संक्षेपेण वाल्मीकेः पूर्वापरचरित्रं विलिख्यताम्।
(४०) कौसल्यानन्दवर्धनो वा सुमित्रानन्दवर्धन इत्यत्र दशरथानन्दवर्धन इत्येव कथं न प्रयुक्तमादिकविना, किमस्य तत्त्वम् ?
(४१) यस्मिन् समये दशरथः प्राणं तत्याज, तदानीं रामः क्वासीत् ?
(४२) नन्दिग्रामस्त्वयोध्यायाः कस्यां दिशि कियति दूरे वर्त्तते ?
(४३) जनस्थाने कियन्ति रक्षांसि रामेण निहतानि ?
(४४) दशरथशूर्पणखयोः का व्युत्पत्तिः ?

(४५) कथं शूर्पणखाया नासाच्छेदनं कारितं रामेण ?
(४६) रघुवंशिनां कः कुलगुरुरासीत्, सुमन्त्रः कश्चासीत् ?
(४७) गुहस्य का जातिः ? किं कर्म, क्व वसतिरित्यखिलं लिख्यताम् ?
(४८) निम्नलिखितानां पदानामर्था निर्दिश्यन्ताम्—

स्वाध्यायः, आत्मवान् , असूया, वशी, नियतात्मा, वाग्मी, महेष्वासः, संयत् , यन्त्री, यदृच्छा, संसद्, वाग्ग्मः तोरणम् आहवः ।

(४९) महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुःसुशिराः सुललाटः सुविक्रमः ॥
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥
एताभ्यां श्लोकाभ्यां किं सूच्यते ?

(५०) "धनदेन समस्त्यागे सत्ये धर्म इवापरः"
कस्य विशेषणमेतत् ? व्याख्या चास्य कीदृशी ?

(५१) रामस्य चित्रकूटस्थितिमारभ्य लङ्कागमनं यावद्वृत्तान्तो विलिख्यताम् ।

(५२) लक्ष्मणस्य वने रामानुगमने को हेतुः ?
(५३) भरद्वाजशरभङ्गसुतीक्ष्णानामाश्रमः कुत्रासीत् ?
(५४) कुत्र कस्माच्च रामेण सुरपतिधनुः प्राप्तम् ?
(५५) "कबन्धं नाम रूपेण विकृतं घोरदर्शनम्"
व्याख्यायतामेतत् ।

(५६) "नु" "ह"
अनयोः शब्दयोः कोऽर्थः ?

(५७) रामे वनमुपगते भरतः राज्यं चकार न वा ?
(५८) ऐच्छत् , चिक्षेप, दिदृक्षुः, प्रेत्य, ईयात् ।
एतानि पदानि साध्यन्ताम् , पदान्तरेण विग्रियन्ताञ्च ।

इति प्रश्नमाला समाप्ता ।

# महाभारतीयशीलनिरूपणाध्याये प्रश्नाः ।

(१) इमे जना नरश्रेष्ठ ! प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥
इत्यत्र 'नरश्रेष्ठ !' अनेन कस्य सम्बोधनम्, तथा च 'मे' अनेन कस्य ग्रहणम् ?

(२) किमपूर्वं विलोक्य दुर्योधनस्य हृदये खेद उत्पन्नः ?

(३) 'सभायां चाह वचनं तत्सर्वं शृणु भारत !' इत्यत्र 'भारत' अनेन कस्य सम्बोधनं केन च कृतमस्ति, तद्विविच्य प्रदर्श्यताम् ।

(४) 'भवतस्तां सभां दृष्ट्वा' इत्यत्र 'ताम्' अनेन कां कीदृशीं वा सभामुद्दिश्योक्तम् ?

(५) पाण्डवैर्दुर्योधनस्य कः सम्बन्धः । पाण्डवदुर्योधनयोः कौ विग्रहौ ?

(६) ज्येष्ठे धृतराष्ट्रे सत्यपि कथं कनीयान् पाण्डू राज्येऽधिरोपितः ?

(७) के के पाण्डवाः, के के च कौरवा उच्यन्ते ?

(८) संक्षेपेण भीष्मपरिचयं प्रदर्श्यताम् ?

(९) सर्वे पाण्डवाः सोदरा वा न ? चेन्न, तर्हि कस्याः के के तनया अभूवन्निति ?

(१०) पुंस्त्वहीने पाण्डौ कथं पञ्च पुत्रा जातास्तत्त्वं प्रदर्श्यताम् ?

(११) दुर्योधनमातुर्नाम किम् ? तस्याः साधारणपरिचयोऽपि दातव्यः ?

(१२) कर्णः कः, तेन च दुर्योधनस्य कः सम्बन्ध आसीत्, तेन तस्य कीदृशो मिथो व्यवहारः ?

(१३) महाभारतसमये क्षत्रियाणां मांसाशनं विधेयमासीन्न वा चेदासीत्तदा तत्प्रमाणं प्रदर्शनीयम् ?

(१४) युधिष्ठिरमहानसे कियन्तो ब्राह्मणा नित्यं भुञ्जते स्म ?

(१५) मान्धातृजनमेजयनाभागनरपतीनां नामानि अस्मिन् अध्यायेऽवलोकितानि चेत्तदा तेषां संक्षेपेण परिचयः प्रदर्शनीयः ।

(१६) शीलं नाम किम्, तल्लक्षणमत्र किं निदर्शितं प्रह्लादेन, तत्स-म्यग्दर्शनीयम् ।

(१७) कथमिन्द्रः प्रथमं बृहस्पतिमेवापृच्छत् ?

(१८) कथमिन्द्रः स्वशत्रोः प्रह्लादस्य निकटं गत्वा विद्याऽधिगता, अनेन काऽपि शिक्षा गृहीता भवता ?

(१९) कस्य बलेन प्रह्लादस्त्रैलोक्यराज्यं प्राप्तवान् ?

(२०) प्रह्लादस्य भृगुणा कः सम्बन्धः ?, तयोः परिचयं च प्रदर्श्य प्राह्लादीया राजनीतिर्लेख्या ?

(२१) प्रह्लादो विप्रसेवको वा विप्रविरोधी आसीत् तत्सप्रमाणं प्रद-र्श्यताम् ?

(२२) किं नाम भुवि अमृतं विद्यते ?

(२३) प्रह्लादो दैत्यो वा देव आसीत्तथा च स कस्य पुत्र इति प्रदर्श्यताम् ?

(२४) शीले प्रह्लादशरीरान्निर्गते धर्मादयोऽपि निर्गता इत्यनेन भवता का शिक्षा गृहीता ?

(२५) इन्द्रः केन वेषेण प्रह्लादसमीपं विद्यालाभाय गतवान् ?

(२६) कथं प्रह्लादः स्वशत्रवे इन्द्राय स्वसामर्थ्यमूलं शीलमुपदिष्टवान् ?

(२७) यद्यप्यशीला नृपते ! प्राप्नुवन्ति श्रियं क्वचित् ।
न भुञ्जते चिरं तात ! समूलाश्च न सन्ति ते ॥
इत्यस्य का सती व्याख्या ?

(२८) भीष्मः कथं कौरवाणां पाण्डवानां च पितामहः इति ?

(२९) भीष्मस्य के के तनया इति लिख्यताम्

(३०) अयं शीलनिरूपणाध्यायः कुत्रत्यः, तथा चास्मात्काः काः शिक्षा गृहीताः ?

(३१) किं नाम शीलम्, तत्प्राप्त्युपायो धृतराष्ट्रेण कः प्रदर्शितः ?

(३२) धर्मः सत्यं तथा वृत्तं बलं चैव तथाप्यहम् ।
शीलमूला महाप्राज्ञ ! सदा नास्त्यत्र संशयः ॥
श्लोकोऽयं सन्दर्भपुरःसरं व्याख्येयः ।

(३३) दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठरनिवेशने ॥

दृष्ट्वा तां पाण्डवेयानामृद्धिं वैश्रवणीं शुभाम्।
अमित्राणां सुमहतीमनुशोचामि भारत ! ॥

श्लोकाविमौ कोशविग्रहप्रदर्शनपुरःसरं व्याख्येयौ।

(३४) पूर्वं के तादृशाः शीलवन्तोऽभवन् येषां स्वयमेव वसुन्धरा वशं समागता ?।

(३५) देवराजाय बृहस्पतिना किंरूपं श्रेय उपदिष्टमिति स्फुटं विलेख्यम्।

(३६) प्रह्लादेन त्रैलोक्यराज्यलाभकथा यथा विप्ररूपायेन्द्राय कथिता तत्सारांशः सरलसंस्कृतभाषया लिख्यताम्।

(३७) तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति।
तेजो विग्रहवत्तात ! शरीरमजहात् तदा ॥

(३८) यदन्येषां हितं न स्यादात्मनः कर्मपौरुषम्।
अपत्रपेत वा येन न तत् कुर्यात् कथञ्चन ॥

(३९) यद्यप्यशीला नृपते ! प्राप्नुवन्ति श्रियं क्वचित्।
न भुञ्जते चिरं तात ! समूलाश्च न सन्ति ते ॥

(४०) अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥

(४१) सोऽयं वागग्रविद्यानां रसानामवलेहिता।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥

(४२) आच्छादयसि प्रावारानश्नासि पिशितौदनम्।
आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥

एते श्लोकाः सन्दर्भकोशविग्रहप्रदर्शनपूर्वं व्याख्येयाः ॥

(४३) सभ्रातृकस्य। चिन्तयतः। महाद्युति। आजानेयाः। अपत्रपेत। प्रशस्यते। आच्छादयसि। एतेषां शब्दानां साधुता प्रदर्श्यताम्।

इति।

अस्याधिकाराः किल पुस्तकस्य
मुहुर्मुहुर्मुद्रणकादयश्च।
प्राकाशकाधीनकृता हि सर्वे
नान्यस्य कस्यापि जनस्य सन्ति ॥



# विज्ञापनम् ।

महानुभावाः !

साधुदृशां भवादृशानामन्तिके सादरमिदमावेदनं यदिह भवने परीक्षासु सर्वासु निर्वाचितानि तदितराण्यपि मुम्बय्यादिस्थानमुद्रितानि औचित्यमञ्जुलेन मूल्येन लभ्यन्ते प्रशस्तानि समस्तशास्त्रपुस्तकानि ।

आदितोऽन्तपर्यन्तं प्रयत्नादवलोक्य वी० पी० द्वारा तेषां प्रेषणं मार्गव्ययेन समं कमीशनावशेषितस्य मूल्यस्य च पार्सलपृष्ठ एव लेखनं सत्यावश्यकत्वे पत्रेण विषयाणामचिरात्सूचनमित्यादिप्रेषणनियमस्तथा व्यवस्थापितो वर्तते, येन कदाचिदपि काचिदपि ग्राहकाणां हानिर्न जायेत । सकृदपि व्यवहारेणात्रत्या सत्यता प्रत्येतुं शक्येति कृतं प्रशंसया ।

स्वनामादेः स्पष्टतया लेखने कष्टमनुग्राहकैर्ग्राहकैः सोढव्यम् । दशाधिकमुद्रामूल्यकपुस्तकासादनसलालसमानसैर्महाशयैः प्रागेव चतुर्थोऽशो मूल्यस्य कृपया प्रेषणीय इति प्रार्थना ।

प्रार्थयिता—
श्रीहरिकृष्णनिबन्धभवनम्,
बनारस सिटी ।

प्रकाशक—श्रीहरिकृष्णदास, मालिक गुप्तबुकडिपो, बनारस सिटी ।
मुद्रक—माधव विष्णु पराड़कर, ज्ञानमण्डल यन्त्रालय, काशी ।

శ్రీరస్తు.

శ్రీసుదర్శనాయ హేతిరాజాయనమః.

శ్రీవైష్ణవమత ప్రవర్తకానాం.

ఆచార్యపురుషాణామత్యంతోపయోగకరః.

# పురాణోక్తసమాశ్రయణవిధిః

83

అయంగ్రంథః

బహు దేశానీత ప్రాచీన గ్రంథసాహాయ్యేన

పండితవరైస్సమ్యక్పరిశోధ్య

సమగ్రస్సంగ్రథితః.

పెంటపాడు,

శ్రీవైష్ణవ ముద్రాక్షరశాలాయాం,

ముద్రాపితస్సన్.

శ్రీవైష్ణవ పత్రికాయాం ప్రకటితో

విజయతేతరామ్.

1939.



[ఏతన్మూల్యమ్ రు 0-3-0.



శ్రీ రస్తు.

శ్రీహయగ్రీవాయనమః.

# పురాణోక్త సమాశ్రయణవిధిః.

శ్లో॥ జ్ఞానానందమయం దేవం । నిర్మల స్ఫటికాకృతిం ।
ఆధారం సర్వవిద్యానాం । హయగ్రీవ ముపాస్మహే॥

శుక్లాంబర ధరం విష్ణుం । శశివర్ణం చతుర్భుజం ।
ప్రసన్నవదనం ధ్యాయే । త్సర్వవిఘ్నోపశాంతయే॥

యస్య ద్విరదవక్త్రాద్యాః । పారిషద్యాః పరశ్శతం ।
విఘ్నా న్నిఘ్నంత మనఘం । విష్వక్సేనం తమాశ్రయే॥

తదేవలగ్నం సుదినంతదేవ । తారాబలం చంద్రబలం తదేవ ।
విద్యాబలందైవబలంతదేవ । లక్ష్మీపతే తేంఘ్రియుగంస్మరామి॥

యత్ర యోగేశ్వరః కృష్ణో । యత్ర పార్థో ధనుర్ధరః ।
తత్ర శ్రీర్విజయో భూతి । ర్ధ్రువా ఇతి మతిర్మమ॥

సర్వదా సర్వ కార్యేషు । నాస్తి తేషా మమంగళం ।
యేషాం హృదిస్థో భగవా । న్మంగళాయతనం హరిః॥

ఆపదా మపహర్తారం । దాతారం సర్వసంపదాం ।
లోకాభిరామంశ్రీరామం । భూయోభూయోనమామ్యహమ్॥

స్మృతే సకలకల్యాణ । భాజనం యత్రజాయతే ।
పురుష స్తమజం విష్ణుం । వ్రజామి శరణం హరిమ్॥

లాభ స్తేషాం జయ స్తేషాం । కుత స్తేషాం పరాభవః ।
యేషా మిందీవరశ్యామో । హృదయస్థో జనార్దనః॥

శ్రీవైష్ణవై రనుజ్ఞాః :— శ్లో॥ ఆపద్ఘనధ్వాంత సహస్రభానవః। సమీహితార్థార్పణ కామధేనవః।సమస్తతీర్థాంబు పవిత్రమూర్తయో । రక్షంతుమాం బ్రాహ్మణపాదపాంసవః॥

అశేషే హేపరిషత్ భవత్పాదమూలే మయాసమర్పితామిమాం యత్కించిత్సౌవర్ణం పరిషద్దక్షిణాం యథోక్తదక్షిణామివ స్వీకృత్య పరీక్షితానాం శిష్యాణాం ప్రకృత పంచసంస్కారాఖ్యకర్మారంభ ముహూర్త స్సుముహూర్తో ఽ స్త్వితి భవంతో మహాంతోఽనుగృహ్ణంతు । లగ్నస్య సర్వే గ్రహాః ఏకాదశస్థాన ఫలదా స్సుప్రసన్నా భూయాసురితి భవంతో మహాంతోఽ నుగృహ్ణంతు । ఉత్తరే కర్మణ్యా విఘ్నమస్త్వితి భవంతో మహాంతో ఽ నుగృహ్ణంతు॥ తథాఽస్త్వితి ప్రతివచనమ్॥

దర్భేష్వాసీనోదర్భాన్ధారయమాణఃపవిత్రపాణిః(ప్రాణానాయమ్య॥ శ్లో॥ అంగుళ్యగ్రై ర్నాసికాగ్రం సంపీడ్యాం పాపనాశనం। ప్రాణాయామమిదంప్రోక్తం మునిభిః పరికల్పితమ్॥ శ్రీగోవిందగోవింద గోవింద శుభాభ్యుదయార్థంచ శుభే శోభనే ముహూర్తే అద్యశ్రీభగవతో మహాపురుషస్య శ్రీమహావిష్ణో రాజ్ఞయా ప్రవర్తమానస్య అద్య బ్రహ్మణః ద్వితీయపరార్థే శ్వేతవరాహకల్పేవైవస్వతమన్వంతరే కలియుగే ప్రథమపాదే జంబూద్వీపే భారతవర్షే భరతఖండే శకాబ్దే మేరో ర్దక్షిణదిగ్భాగే అస్మిన్ వర్తమాన వ్యావహారిక చాంద్రమానేన ప్రభవాదిషష్టిసంవత్సరాణాంమధ్యే...సంవత్సరే... అయనే ...ఋతౌ। ...మాసే ...పక్షే ...తిథౌ ...వారే ... నక్షత్రే ...యోగే ...కరణే ...ఏవంగుణవిశేషణవిశిష్టాయాం శుభతిథౌశోభనగృహేభగవద్భాగవతాచార్య సన్నిధౌ శ్రీభగవదాజ్ఞయా భగవత్కైంకర్యార్థం పరీక్షితానాం శిష్యాణాం పంచసం

స్కార కర్మకర్తుంసుదర్శనహోమాఖ్యంకర్మ కరిష్యమాణః ఆదౌ నిర్విఘ్నేన పరిసమాప్త్యర్థం శ్రీవిష్వక్సేనపూజాం కరిష్యే॥

## —◆ విష్వక్సేనపూజా. ◆—

శ్లో॥ విష్వక్సేనం సకలవిబుధ ప్రౌఢసైన్యాధినాథం । ముద్రాచక్రే కరతలయుగే శంఖదండౌ దధానం । మేఘశ్యామం సుమణిమకుటం పీతవస్త్రం శుభాంగం ధ్యాయేద్దేవం విజితదనుజం సూత్రవత్యాస మేతమ్॥ శ్లో॥ ముగ్ధసూత్రవతీనాథం చతుర్భుజ విరాజితం । పవిత్రాఖిలసైన్యంతం దేవ మావాహయామ్యహం । విష్వక్సేనమావాహయామి॥ శ్లో॥ ఫణాసహస్రసహితం ప్రభామండల మండితం । శుద్ధజాంబూనదమయం దదామ్యాసన ముత్తమమ్॥ ఆసనం సమర్పయామి॥ శ్లో॥ మంత్రపూతం మహాశుభ్రంనదీనాం పుణ్యవారిణాం। గృహాణార్ఘ్యం మయాదత్తం సర్వసైన్యాధిప ప్రభో॥ అర్ఘ్యం సమర్పయామి॥ శ్లో॥ కమలాకులయోర్నిత్యం సేవ్యయో ర్నిత్యసూరిభిః। పాద్యం దదామి దేవేశ భక్త్యాహం పాదయో స్తవ॥ పాదయోః పాద్యం సమర్పయామి॥ శ్లో॥ శర్కరా మధుసంయుక్తం దధిక్షీర సమన్వితం । ఇదం పంచామృతస్నానం గృహాణపురుషోత్తమ॥ పంచామృతస్నానం సమర్పయామి॥ శ్లో॥ గంగాయాః పుణ్యసలిలం స్నానార్థం విదదామ్యహం । స్నానే నానేన దేవేశ ప్రీతోభవ చమూపతే॥ శుద్ధోదకస్నానం సమర్పయామి॥ భాగీరథీ సమానీతం సువర్ణకలశస్థితం । సర్వపాపప్రశమనం గృహాణాచమనం విభో॥ ఆచమనం సమర్పయామి॥ శ్లో॥ చమూనాథ నమస్తేస్తు నరకార్ణవ తారక । దదామి వస్త్రం దేవేశ ధారయ త్వ మనుత్తమం॥ వస్త్రం సమర్పయామి॥ శ్లో॥ యజ్ఞోపవీతం పరమం పవిత్రగ్రంథిసంయుతం । తంతుత్రయయుతం దివ్యమంగీకర్తుం త్వమర్హసి॥ యజ్ఞోపవీతం సమర్పయామి॥ శ్లో॥ కస్తూరీ కుంకుమోపేతం కర్పూరేణ సమన్వితం ।

గృహ్యతాం దేవతాశ్రేష్ఠ దివ్యం చందనలేపనమ్॥ శ్రీగంధం సమర్పయామి॥ అక్షతాన్ ధవళాన్ దేవ శాలీయాంశ్చ సుమంగళాన్ హారిద్రాచూర్ణసంయుక్తాన్ గృహాణ పరమేశ్వర॥ అక్షతాన్ సమర్పయామి॥ శ్లో॥ మాల్యానిచ సుగంధీని మల్లికాదీనిచ ప్రభో। మయా ఉహృతాని పుష్పాణి పూజార్థం ప్రతిగృహ్యతామ్॥ పుష్పాణిసమర్పయామి॥ శ్లో॥ మకుటం కుండలేచైవ కేయూరకటకేతథా హారమంగుళికంచైవ స్వర్ణహారం తథైవచ। నూపురం కటిసూత్రంచ పాదకంకణమేవచ। ఏతాన్యపి గృహాణత్వం భూషణాని చమూపతే॥ నానావిధ రత్నభూషణాని సమర్పయామి॥ శ్లో॥ వనస్పత్యుద్భవైర్దివ్యై ర్గంధాఢ్యైస్సుమనోహరైః। కపిలాఘృతసంయుక్తైర్ధూపోయంప్రతిగృహ్యతామ్॥ధూపంసమర్పయామి॥ శ్లో॥ సాజ్యం ద్వివర్తిసంయుక్తం వహ్నినా జ్వలితం మయా। గృహాణ మంగళం దీపంత్రైలోక్య తిమిరాపహమ్॥ దీపం దర్శయామి॥ శ్లో॥ పాయసాన్నం గుడాన్నంచ ముద్గాన్నం శుద్ధమోదనం। దధిక్షీరాజ్య సంపన్నం నానాపూప ఫలాన్వితం। నైవేద్యం గృహ్యతాందేవ భక్తిర్మేహ్యచలాగురో॥ నైవేద్యం సమర్పయామి॥ శ్లో॥ పూగీఫలైస్సకర్పూరై ర్నాగవల్లీ దళైర్యుతం। ముక్తాచూర్ణేన సంయుక్తంతాంబూలం ప్రతిగృహ్యతామ్॥ తాంబూలం సమర్పయామి॥ శ్లో॥ హిరణ్యగర్భ గర్భస్థం హేమబీజం విభావసోః। అనంతపుణ్య ఫలదమత శ్శాంతిం ప్రయచ్ఛమే॥ సువర్ణమంత్రపుష్పం సమర్పయామి॥

సర్వోపచారాన్ సమర్పయామి॥ శ్లో॥ యస్యస్మృత్యాచ నామోక్త్యా తపః పూజాక్రియాదిషు। న్యూనంసంపూర్ణతాంయాతి। సద్యోవందేత మచ్యుతం॥ మంత్రహీనం క్రియాహీనం భక్తిహీనం చమూపతే। యత్పూజితం మయా దేవ పరిపూర్ణం తదస్తుతే॥

అనేన షోడశోపచారపూజయా భగవాన్ సర్వాత్మకః శ్రీవిష్వక్సేన స్సుప్రీతో వరదో భవతు । ఉత్తరే కర్మణ్యావిఘ్నమస్తు। యజమానస్య మనో వాంఛాఫలసిద్ధి రస్తు । శ్రీవిష్వక్సేన ప్రసాదం యజమాన శ్శిరసా గృహ్ణాతు । విష్వక్సేనం యథాస్థానం ప్రతిష్ఠాపయామి। శోభనార్థం పునరాగమనాయచ॥

—◆ పు ణ్యా హ వా చ న మ్. ◆—

ఆదౌ శ్రీలక్ష్మీనారాయణాభ్యాం నమః । శ్రీసీతారామాభ్యాం నమః । శ్రీరుక్మిణీకృష్ణాభ్యాం నమః । కేశవాది చతుర్వింశతిమూర్తిభ్యో నమః । అనంత గరుడ విష్వక్సేనాదిభ్యో నమః । చండాది ద్వారపాలకేభ్యో నమః । కుముదాది గణేశ్వరేభ్యో నమః । నిత్యముక్తేభ్యో నమః । పరాంకుశ పరకాల యతీంద్రాది మహాభాగవతేభ్యో నమః । సర్వేభ్యః శ్రీవైష్ణవేభ్యోనమః॥ శ్లో॥ పృథ్వి త్వయా ధృతా లోకాః దేవి త్వం విష్ణునా ధృతా । త్వంచ ధారయ మాం దేవి పవిత్రం కురు చాసనం । మాంచ పూతం కురు ధరే తతో స్నిగ్ధం సురేశ్వరి॥ శ్లో॥ అంగుళ్యగ్రైర్నాసికాగ్రం సంపీడ్యం పాపనాశనం । ప్రాణాయామమిదం ప్రోక్తం మునిభిః పరికల్పితమ్. శుభే శోభనే ముహూర్తే ఏవంగుణ విశేషణవిశిష్టాయాం శుభతిథౌ భగవత్సంబంధకాలే శుద్ధ్యర్థం వృద్ధ్యర్థం అభ్యుదయార్థంచ సర్వైః శ్రీవైష్ణవైస్సహపుణ్యాహవాచనంకరిష్యే॥ మనస్సమాధీయతామ్ సమాహితమనసస్స్మః। ప్రసీదంతుభవంతః-ప్రసన్నాఃస్మః। భవద్భిరనుజ్ఞాతః పుణ్యాహంవాచయిష్యే-వాచ్యతాం । పుణ్యాహంభవంతో బ్రువంతు-పుణ్యాహమ్॥ శ్లో॥పద్మోద్భవం దేవనిధింపురాణం బ్రహ్మాణమీశం జగతి ప్రణమ్య । స్తోతుం ప్రవక్ష్యే ప్రయతో గృహాణ । ఏతే గ్రహా స్సుష్టికరా భవంతు॥ దివాకరం తేజసా భాసమానం

సహస్రాంశుం సర్వదేవస్వరూపం । త్రయీతనుం ధీరమాద్యం గృహాణ । రవిం సదా శరణమహం ప్రపద్యే॥ ఇమే శ్రియే పద్మహస్తే సుగంధే । వక్షస్థలైః పుణ్యాసు యాజమానైః । శ్రీమోదవంత్రై రభిమన్యమానైః । పుత్రైః పౌత్రైః శ్రీ ర్వర్ధతాం దీర్ఘమాయుః॥ వాచం పురాణ మనుమంత మన్నమక్షీయమాణం యదిదం చరంతి । ఋతస్య కాలే కవయో జుషాణాం యదాశ్రియ వై స్వర్ణకలశే దీర్ఘమాయుః॥ వృద్ధి మాయుష్య మారోగ్య। మాయుషాశోభమానం । మహ్యాతే ధాన్యం ధనం పశుం బహుపుత్రలాభం। శతసంవత్సరం దీర్ఘమాయుః॥ శ్లో॥ సౌదర్శన్యుజ్జిహానా దిశవిదిశి తిరస్కృత్య సావిత్రమర్చి । ర్బాహ్యాబాహ్యాంధకార క్షతజగదగదంకారభూమ్నా స్వధామ్నా । దోఃఖర్జూ దూర గర్జ ద్విబుధరిపువధూ కంఠవైకల్యకల్యా । జ్వాలాజాజ్వల్యమానా ("వితరతు భవతాం" అనిపాఠాంతరము) జనయతు జగతాం వీప్సయాఽభీప్సితాని॥ నిన్యే వన్యేవ కాశీ దవశిఖి జటిలజ్యోతిషా యేన దాహం॥ కృత్యా వృత్యా విలిల్యే శలభ సులభయా యత్ర చిత్రప్రభావే । రుద్రోఽప్య ద్రిదుర్గహితాత్రి సహ గహనగుహాం యద్భయాదభ్యయాసీ । ద్దిశ్యాద్విశ్వా ర్చితోఽవస్స శుభమని భృతం శౌరిహేతిప్రతాపః॥ జ్యోతిశ్చూడాలమౌళి స్త్రి నయనవదనష్షోడశోత్తుంగబాహుః । ప్రత్యాలీఢేన తిష్ఠన్ ప్రణవశశధరాధారషట్కోణవర్తీ । నిస్సీమేన స్వభూమ్నా నిఖిలమపి జగత్ క్షేమవ న్నిర్మిమాణో । భూయాత్సౌదర్శనో వః ప్రతిభటపరుషః పూరుషః పౌరుషాయ॥ దేవస్య గృహే మునయో వసంతి దేవానాం కవయః పార్థివాస్మ । దేవా ఇదం మే సుమనస్యమానః । దివి దేవానసవో దీర్ఘమాయుః॥ అగ్నిరివ శుచిర్భవ । ఆదిత్యఇవ తేజోవాన్భవ । విష్ణురివ శ్రీమాన్భవ । బ్రహ్మేవాయుష్మాన్భవ । ధనకనక

సమృద్ధి ర్ధాన్య మైశ్వర్యవృద్ధిః । యువతిజనసమృద్ధిః। పుత్రపౌత్రాభి వృద్ధిః .। పరిజనపశువృద్ధిః । కౌశలం ధర్మవృద్ధిః । తవ భవతు సమస్తం మంగళం శాశ్వతంచ॥ శాంతిరస్తు । పుష్టిరస్తు । తుష్టి రస్తు । వృద్ధిరస్తు । అవిఘ్నమస్తు। ఆయుష్యమస్తు । ఆరోగ్యమస్తు। ఐశ్వర్యమస్తు । ధనధాన్య సమృద్ధిరస్తు । గోబ్రాహ్మణేభ్య శ్శుభం భవతు । బహిర్దేశే అరిష్టనిరసనమస్తు । యత్పాపం తత్ప్రతిహాత మస్తు । సర్వశోభనమస్తు । సర్వా స్సంపదస్సంతు । శుక్రాంగారక శనైశ్చర రాహు కేతు సోమాదిత్య పురోగాః సర్వగ్రహాః ప్రీయం తామ్ । ఇంద్రపురోగా స్సర్వదేవాః ప్రీయంతాం । సర్వఋషయః ప్రీయంతాం। శామ్యంతు ఘోరాణి। శామ్యంతు పాపాని। శామ్యంతు ఈతయః।శుభానివర్ధంతాంవర్ధంతాంశుభాని। ప్రాచ్యైమార్జయతామ్। దక్షిణాయై మార్జయతామ్ । ప్రతీచ్యై మార్జయతామ్ । ఉదీచ్యై మార్జయతామ్ । ఊర్ధ్వాయ మార్జయతామ్ । అధరాయ మార్జ యతామ్ । శ్రీవైష్ణవేభ్యో మార్జయతామ్ । పుణ్యాహవాచనమం త్రజపదక్షిణాం మనసోత్సాహపరిమిత హిరణ్యం తుభ్యమహం సం ప్రదదే నమమ॥ పుణ్యాహజలేన శిష్యశిరసి ప్రోక్ష్య॥ ప్రాణానా యమ్య॥ అంగుళ్యగ్రై ర్నాసికాగ్రం సంపీడ్యంపాపనాశనం। ప్రాణా యామ మిదంప్రోక్తం మునిభిః పరికల్పితమ్॥ శుభాభ్యుదయార్థంచ శుభతిథౌ । శిష్యస్య తాపాది పంచసంస్కార సిద్ధ్యర్థం। సర్వకిల్బిష నివృత్త్యర్థం దృష్టాదృష్ట ఫలావాప్త్యర్థం అనాద్యవిద్యావాసనయా ధిగతసంసారచక్రే విచిత్రతరాసు యోనిషు బాల్య యౌవన కౌమార వార్ధక్యేషు రహసి ప్రకాశేచజాగ్రత్స్వప్నసుషుప్త్యవస్థాసు మనోవాక్కాయ కర్మభిః కామతోఽకామతశ్చ కృత మహాపాత కోపపాతక ప్రకీర్ణాది సమస్త దురితక్షయార్థం ॥ ధర్మార్థ కామ మోక్ష చతుర్విధ పురుషార్థ సిద్ధ్యర్థం శ్రీలక్ష్మీనారాయణ స్వామి

సముద్దిశ్య శ్రీలక్ష్మీనారాయణ ప్రీత్యర్థం। ఆచార్యానుజ్ఞయా మహా భాగవతైస్సహ శ్రీమదష్టోత్తర శతసంహితాయాం శ్రీపాంచరాత్రా గమోక్త ప్రకారేణ శ్రీవిష్వక్సేన మంత్రసాధనైః శిష్యశిరఃప్రోక్షణార్థం కౌతుకసూత్ర ప్రోక్షణార్థంచ వారుణ కలశాభ్యర్చనం కరిష్యే॥

## —♦ వారుణకలశాభ్యర్చనమ్. ♦—

తతః ప్రాగ్భాగే భగవంతం పశ్చిమాభిముఖ మారాధ్య। తత్ర కలశం ప్రతిష్ఠాప్య। తస్యోపరి కూర్చంనిధాయ। పంచాయుధ స్తోత్రైః కుంభమభిమంత్ర్య॥ స్ఫురత్సహస్రారశిఖాతితీవ్రం సుదర్శనం భాస్కరకోటి తుల్యం। సురద్విషాం ప్రాణవినాశి విష్ణోశ్చక్రం సదాహం శరణం ప్రపద్యే॥ విష్ణోర్ముఖోత్థానిల పూరితస్య యస్య ధ్వని ర్దానవ దర్పహంతా। తం పాంచజన్యం శశికోటి శుభ్రం శంఖం సదాహం శరణం ప్రపద్యే॥ హిరణ్మయీం మేరు సమానసారాం కౌమోదకీం దైత్యకులైకహంత్రీం। వైకుంఠ వామాగ్రకరాభిమృష్టాం గదాం సదాహం శరణం ప్రపద్యే॥ రక్షోసురాణాం కఠినోగ్రకంఠ చ్ఛేదక్షరత్ శోణితదిగ్ధధారం తం నందకంనామ హరేః ప్రదీప్తం ఖడ్గం సదాహం శరణంప్రపద్యే యజ్జ్యానినాద శ్రవణాత్సురాణాం చేతాంసి నిర్ముక్త భయాని సద్యః। భవంతి దైత్యాశని బాణవర్షై శ్శార్ఙ్గం సదాహం శరణం ప్రపద్యే॥ ఇత్యాదినా గంధపుష్ప ధూప దీపై రభ్యర్చ్య। ఫలనైవేద్యం దత్వా। తదుదగ్భాగే పంచప్రస్థ తండులేనమంటపం కృత్వా। ప్రాక్పశ్చిమ దక్షిణోత్తర క్రమేణ చతురశ్ర రేఖాభిః పద్మం కారయిత్వా। తన్మధ్యే కర్ణికాం లిఖిత్వా తద్బాహ్యావర ణేషు ప్రాచ్యాదిక్రమేణ అష్టసుదిక్షు అష్టదళపద్మాని లిఖిత్వా।

తేషు కేశవాదినామాని లిఖిత్వా। తేషా మంతరేషు శ్రీధరాది
చత్వారి నామాని లిఖిత్వా । కర్ణికాయాం వాసుదేవనామ
లిఖిత్వా । తేష్వేకైకకలశం నిధాయ । పంచాయుధ స్తోత్రేణ
ఆవాహిత కుంభోదకేన ఆపూర్య తదుపరి కూర్చం నిధాయ। తేషు
త్రియోదశ కలశేషు త్వక్పంచపల్లవ వస్త్ర రత్నాదిభి రలంకృత్య॥
చందనాగరు కర్పూర జాజీఫల కరేణుకాః। పంచత్వచ ఇతిప్రో
క్తాశ్శుభకర్మణిచోదితాః॥ అశ్వత్థ చూతాశోకాని శ్రీముకంనారి
కేళకం। పంచైతే పల్లవాః ప్రోక్తాః బోధితాః శ్శుభకర్మణి॥ గంధ
పుష్పాదిభి రలంకృత్య। ఫలనైవేద్యం దత్వా । అష్టావింశతివార
మష్టోత్తరేణాభిమంత్ర్య। కూర్చేన శిష్యశిరసి మూలమంత్రేణకల
శోదకేన ప్రోక్ష్య। ప్రాణానాయమ్య॥ శ్లో॥ అంగుళ్యగ్రై...॥
ఆగ్నేరుత్తరతః । వారుణకలశ స్థాపనార్థం యథాశక్తి తండులైః
నూతనవస్త్రోపరి చతురశ్రిమ తండులం కల్పయిత్వా। తస్మిన్ కల
శం ప్రతిష్ఠాప్య ఉదకమాపూర్య॥ నానారత్న ప్రభాయుక్తం నవ
వస్త్రేణ వేష్టితం। కలశం స్థాపయిష్యామి కావేరీ తోయపూరితం।
నూతనవస్త్ర మావేష్ట్య। గంధపుష్పాదిభి రలంకృత్య॥ సంనిధత్స్వ
హాభగవత్పదాంబుజ వినిసృతే। మందాకిని నమస్తుభ్యం వరదా
భవ శోభనే। కలశేత్వామహం వందే కలికల్మష నాశినీం। సంసార
పాతినం చైవ ప్రసాదం కర్తుమర్హసి॥ ఆపఃపునంతు మాంశుద్ధాః।
హరిపాద సముద్భవాః। ఏభి స్సంజాయతే సర్వం జగత్ స్థావరజం
గమం॥ శుద్ధజలం నిక్షిప్య॥ బ్రహ్మకూర్చహేతు రుపవాసో బ్రహ్మ
కూర్చోపవాసః। తేన యజనయోగ్యస్య త్రైవర్ణికస్య నిష్కృతి
ర్భవతి । శూద్రస్యతు ఉపవాసప్రత్యామ్నాయో దానం। అత
శ్శూద్రోపి దానం కృత్వా పశ్చా ద్బ్రహ్మకూర్చం పిబేత్ । తదిద
మహాభాగాత్రోపవాసపూర్వకం। శ్వపాక సదృశ మత్యంత పాప

కారిణమపి శోధయతి । తత్ర కిముపవక్తవ్య మల్పపాపేన నిషిద్ధ జలాది పానేనోపేతం శోధయతీతి । బ్రహ్మకూర్చ ద్రవ్యాణ్యాహ । గోమూత్రం గోమయం క్షీరం దధి సర్పి కుశోదకం । నిర్దిష్టంపంచ గవ్యంతు పవిత్రం పాపశోధన మితి॥ యద్గోమూత్రాదికం పంచ గవ్యం యచ్చ కుశోదకం తదుభయం పవిత్రం అంత్యం పాపశోధన మితి । ధర్మశాస్త్ర నిర్దిష్ట బ్రహ్మకూర్చాంగ భూతానాం గోమూత్రాదీనాం పంచానాం కారణభూతా యా గావః పంచ తాసాం వర్ణవిశేషానాహ॥ శ్లో॥ గోమూత్రంకృష్ణవర్ణాయా శ్వేతాయాశ్చైవ గోమయం పయశ్చ తామ్రవర్ణాయా రక్తాయా గృహ్యతేదధి । కపిలాయా ఘృతం గ్రాహ్యం సర్వం కాపిల మేవవా ఇతి॥ విచిత్ర వర్ణానాం పంచానాం గవామసంభవే గోమూత్రాది పంచకంసర్వం కాపిలమేవ గ్రాహ్యమ్ । గోమూత్రాదీనాం కుశోదకాంతానాం షణ్ణాంద్రవ్యాణాం ప్రత్యేకంపరిమాణ విశేషమాహ॥ మూత్రమేక పలం దద్యాత్ అంగుష్ఠార్ధంతు గోమయం। క్షీరంసప్తపలందద్యాత్ దధి త్రిపలమేవచ । సర్పి రేకపలం దద్యాత్ పలమేకం కుశోదక మితి॥ పర్వద్వయోపేతమంగుష్ఠం । తతోవిపరితన పర్వణా సమాన పరిమాణం గోమయం గ్రాహ్యం । దధ్యాదే రేకస్మిన్ పలాశాది పాత్రే యథోక్త పరిమాణాని ద్రవ్యాణి నిక్షిపేత్॥ తత్ర పాత్రం ప్రజాపత్యం । పలాశం పద్మపత్రంవా తామ్రంవాథ హిరణ్మయం । గృహీత్వా సాద యిత్వాథ తతః కర్మసమారభేదితి॥ వృద్ధపారాశరస్తు గోమూత్రాదీనాం పరిమాణమాహ॥ గోమూత్రం మాష కాన్యష్టౌగోమయస్యతు షోడశ । క్షీరస్య ద్వాదశప్రోక్తాదధ్నస్తు దశకీర్తితః । గోమూత్రవత్ ఘృతశ్చాష్టౌ తదర్ధంతు కుశోదకమితి॥ విశుద్ధజల గోమూత్రం । కుశయుక్తం శుభావహం । తేనదుష్కృత కర్మాణః పునీతా స్సర్వకిల్బిషైః॥ గోమూత్రం నిక్షిప్య॥ కపిలాగో

మయం పుణ్యం కారణం సర్వకర్మణాం । ప్రభాతకాలసంజాతమేవం పూతం కరోతుమాం॥ గోమయం నిక్షిప్య॥ కల్పితంహవ్యకార్యార్థే మునిభి ర్వేదపారగైః । సురభిస్తన జాతంమాం పాతు క్షీరంపయో న్వితం॥ క్షీరం నిక్షిప్య॥ సౌరభేయో శరశ్చంద్ర చంద్రికాధవళం దధి । వారుణం తీర్థకలశం సమాశ్రిత్యపునంతుమాం॥ దధినిక్షిప్య॥ నవనీత సముద్భూతం నియతం హోమకర్మసు । సర్వసిద్ధికరం దోషహరం రక్షతు గోఘృతం॥ ఘృతం నిధాయ॥ కుశస్థల సముద్భూతం కుశై స్సముభిపూజితం । ప్రోక్షణార్థం సమాయాతు కలిహం కలుషాపహం॥ కుశోదకం నిక్షిప్య॥ సాలగ్రామ మహాశైల శిలాగర్భాభినాయచ। పవిత్రాయ పవిత్రాణాం హిరణ్యాయనమో నమః॥ హిరణ్యం నిక్షిప్య॥ ఇక్షుసార సముద్భూతం లోకానాం హితకారిణే । విచిత్రరుచిసంయుక్తే శర్కరే సుభగాభవ॥ శర్కరం నిక్షిప్య॥ కాండాసహస్ర సంయుక్తా శతమూలా శతాంకురా । దుస్స్వప్ననాశనీ దూర్వాసర్వంహరతు పాతకమ్॥ దూర్వాన్ నిక్షిప్య॥ మకరందరసోల్లాస మక్షికానన సంభవః । నియతం శుభకార్యేషు మధురక్షతుమాంసదా॥ మధు నిక్షిప్య॥ మణయస్సింధుసంభూతా॥ పద్మరాగాదయోఽమలాః। శ్రేయస్కామానమస్తుభ్యంమాంపునంతు నిరంతరం॥ మణీ న్నిక్షిప్య॥ ఫలాని పనసాదీని మాధుర్యరసవంతిచ। పరిపక్వఫలాన్యేతే సతతం శుభసంపదమ్॥ ఫలాని నిక్షిప్య॥ ఔదుంబర శమీబిల్వ పలాశాశ్వత్థ పల్లవాః । వసంతకాల సంభూతాః పునంతు కలశస్థితాః॥ పంచపల్లవాన్ నిక్షిప్య॥ న్యగ్రోధోదుంబరాశ్వత్థ ప్లక్షరాజ రసాలకాః । పాంతు నిత్యం పక్వఫలాః భుజ్యంతేస్మ వినిర్మితాః॥ ఔదుంబరాదీ న్నిక్షిప్య॥ మాషముద్గ యవవ్రీహి గోధూమాద్యా శ్శుశోభనాః । పునంతు మునిభి స్సర్వే పరార్థప్రతిపాదితాః॥ నవధాన్యాని నిక్షిప్య॥ హరిద్రాచూర్ణ సంయుక్తాః

సర్వమంగళో మంగళాః । అక్షతాః క్షేమఫలదాః భవంతు శుభ కర్మణి॥ అక్షతాన్ నిక్షిప్య॥ మలయాచలసంజాతం సుఖదంస్వాదు శీతలం। మనోహరం మనుష్యాణాం పునంతు హరిచందనమ్॥ హరి చందనం నిక్షిప్య॥ మాధవీమల్లికాదీని మకరందభరాణివై। పునంతు పుష్పజాతాని ధార్యాణిసురసత్తమైః॥ పుష్పాణినిక్షిప్య॥ పవిత్రభూ సముద్భూతా తులసీ మూలవాసినీ । త్వయాచ శుధ్యతేలోకా మృత్తికే పరమాముదా॥ తులసీమూల మృత్తికాం నిక్షిప్య॥ మూలమంత్రేణాభిమంత్ర్య । సర్వే సలిలతీర్థాని తీర్థాని జలదానిచ। ఆయాంతు ప్రోక్షణార్థంమే దురితక్షయ హేతవే॥ గంగేచ యము నేచైవ గోదావరి సరస్వతి నర్మదే సింధుకావేరి సద్యస్త్వం సన్నిధిం కురు॥ కలశస్య ముఖే విష్ణుః కంఠే రుద్ర స్సమాశ్రితః। మూలేతత్ర స్థితో బ్రహ్మ మధ్యే మాతృగణా స్స్మృతాః । కుక్షౌతు సాగరా స్సప్త సప్తద్వీపా వసుంధరా॥ ఋగ్వేదోథ యజుర్వేద స్సామ వేదో హ్యథర్వణ॥ । అంగైశ్చ సహితా స్సర్వే కలశంతు సమా శ్రితాః॥ సర్వవేదస్వరూపాయ మోక్షమార్గైకహేతవే । సువర్ణ రత్న పూర్ణాయ కలశాయ నమోనమః॥ అథ స్వర్ణకలశే కేశవాదీ నావాహ్య॥ ధ్యేయస్సదా సవితృమండల మధ్యవర్తీ నారాయణ స్సరసిజాసన సన్నివిష్టః। కేయూరవాన్ మకరకుండలవాన్ కిరీటీ హారీ హిరణ్మయవపు ర్ధృతశంఖచక్రః॥ కలశస్య ప్రాచ్యాందిశి సూర్యమండల మధ్యవర్తినం శంఖచక్రధరం నారాయణ మావాహ యామి॥ పద్మప్రియే పద్మిని పద్మహస్తే పద్మాలయే పద్మ దళాయతాక్షి । విశ్వప్రియే విష్ణుమనోనుకూలే త్వత్పాదపద్మం మయి సన్నిధత్స్వ॥ కలశస్య దక్షిణభాగే శ్రియమావాహయామి॥ వసుంధరే వరారోహే సర్వలోకైకపూజితే । ప్రసీద భవమేదేవి మాధవీమాధవప్రియే॥ కలశస్యవామభాగేభూమిమావాహయామి॥

పద్మగర్భం చతుర్వక్త్రం భారతీ హృదయేశ్వరం । జగదుద్భవ కర్తారంధ్యాయేద్బ్రహ్మాణమవ్యయం॥ బ్రహ్మాణ మావాహయామి॥ ఇంద్ర మైరావతారూఢం శచీదేవ్యా సమన్వితం। సేవ్యమానం సుర గణైః దేవ మావాహయామ్యహం॥ ఇంద్ర మావాహయామి॥ వైశ్వానరం మేషవాహం స్వధాస్వాహాసమన్వితం। ఆవాహయామి యజ్ఞేశం తీవ్రం తేజోవిభాసితమ్॥ అగ్ని మావాహయామి॥ దండ పాశధరం దేవం మహిషోత్తమ వాహనం । యమునాభ్రాతరం ప్రీత్యా యమ మావాహయామ్యహమ్॥ యమ మావాహయామి॥ నిర్ఋతిం రాక్షసాధీశం । మనుష్యోత్తమవాహనం । పత్నీభిస్సహితం లోక నాథ మావాహయామ్యహమ్॥ నిర్ఋతి మావాహయామి॥ ప్రాచేతసం ప్రజానాథం । మకరారోహణోత్సుకం । ఆవాహయా మ్యహంనాథం పాశహస్తం సురూపిణమ్॥ వరుణమావాహయామి॥ జగత్ప్రాణం మహాధీశం సర్వలోక సుఖావహం । కృష్ణసార సమా రూఢం వాయుమావాహయామ్యహమ్॥ వాయుమావాహయామి॥ కుబేరం గుహ్యకాధీశం నిధీనా మీశ్వరం విభుం । అశ్వారూఢం సపత్నీక మేనమావాహయామ్యహమ్॥ కుబేరమావాహయామి॥ ప్రమథానాం గణైర్యుక్తం పార్వతీప్రాణనాయకం । వృషవాహం దిశాధీశం ఈశమావాహయామ్యహమ్॥ ఈశానమావాహయామి॥ ఆవాహితేభ్యః సర్వేభ్యః॥ ధ్యాయామి । ఆవాహయామి । ఆసనం సమర్పయామి। పాదయోః పాద్యంసమర్పయామి।హస్తేష్వర్ఘ్యం సమ ర్పయామి। ముఖేష్వాచమనీయం సమర్పయామి। ఔపచారికస్నానం సమర్పయామి । స్నానానంతరం ఆచమనీయం సమర్పయామి । వస్త్రం సమర్పయామి । యజ్ఞోపవీతం సమర్పయామి । గంధంసమ ర్పయామి । పుష్పం సమర్పయామి । ధూప మాఘ్రాపయామి । దీపం దర్శయామి । నైవేద్యం సమర్పయామి । తాంబూలం సమ

ర్పయామి । సువర్ణమంత్రపుష్పం సమర్పయామి । షోడశోపచార పూజాం త్సమర్పయామి॥

—• అగ్ని ప్రతిష్ఠాపనమ్. •—

యజ్ఞమూర్తిం హరింవిష్ణుం అగ్నిమండల మధ్యగం । శంఖ చక్రధరం దేవం వేదాంగోపాంగ శోభితం । లక్ష్మ్యాసహ సమా యుక్తం ధ్యాయే ద్యజ్ఞపతిం హరిమ్॥ గంధపుష్పాదిభి రభ్యర్చ్య । ఫలనైవేద్యందత్వా । ప్రతిసరసూత్రం అష్టావింశతివార మష్టాక్షరే ణాభిమంత్ర్య । కూర్చేన శిష్యశిరసి ప్రతిసరేచ మూలమంత్రేణ ప్రోక్ష్య । ఆచార్యః స్వకరే తూష్ణీం కంకణ మాబధ్య । మూల మంత్ర ముచ్చార్య । ఏవంగుణ విశేషణ విశిష్టాయా మస్యాం శుభ తిథౌ అస్య... శిష్యస్య సకుటుంబస్య సభార్యాకస్య సపుత్రికస్య క్షేమస్థైర్య విజయ ఆయురారోగ్యైశ్వర్యాభివృద్ధ్యర్థం ధర్మార్థకామ మోక్షచతుర్విధ పురుషార్థసిద్ధ్యర్థం శ్రీమన్నారాయణదాస్యసిద్ధ్యర్థం భగవత్ప్రసాద సిద్ధ్యర్థం పంచసంస్కార కర్మణా సంస్కరిష్యే॥ విధివ దగ్నింప్రతిష్ఠాప్య॥ స్థండిలోల్లేఖనాది చతుష్పాత్ర ప్రయోగం కుర్యాత్ । శ్వేతతండులచూర్ణేన ప్రాదేశమాత్రం చతురశ్రమస్థండి లం కల్పయిత్వా । అద్భి రవోక్ష్య । ఉల్లేఖనదర్భా నైఋత్యాం నిరస్య । హస్తౌప్రక్షాళ్య । అగ్నిం ప్రతిష్ఠాప్య। ధ్యానపూర్వకమలం కృత్య । మేషారూఢం జటాబద్ధం గౌరవర్ణం మహౌజసం । ధూమ ధ్వజం లోహితాక్షం సప్తార్చి స్సర్వతోముఖం। ఆత్మాభిముఖమాసీ నమేనం ధ్యాయే ద్ధుతాశనం॥ ప్రాఙ్ముఖాగ్నే మమ అభిముఖోభవ। అలంకృత్య ।. అగ్నయేనమః । జాతవేదసేనమః। సహోజసేనమః। అజరాప్రభవేనమః । వైశ్వానరాయనమః । నర్యాపసేనమః । పఙ్క్తి రాధసేనమః । విసర్పిణేనమః । శ్రీయజ్ఞపురుషాయనమః॥ ఆవాహా

నాది షోడశోపచారాన్ సమర్పయామి । పరిస్తీర్య । తూష్ణీంపరి
షిచ్య । దర్వ్యాజ్యస్థాలీం ప్రోక్షణీంచ చతుష్పాత్రాణి ప్రయుజ్య ।
పాణిగాగ్రే ద్వేదర్భౌ ప్రాదేశమాత్రేపవిత్రేకురుతే। తృణంకాష్ఠంవా
అంతర్భిదాయ ఛిన త్రినఖేన । అపఉపస్పృశ్య । అద్భిరనుమృజ్య ।
ప్రోక్షణపాత్రమాదాయ । తస్యామపఆనీయ । త్రిరుత్పూయ ।
ఆజ్యాదిపాత్రేషు ప్రోక్ష్య । ఆజ్యస్థాలీ మాదాయ। ప్రోక్షణపాత్ర
స్యోత్తరతో నిధాయ । తస్య గోఘృతం నినీయ । ఉదీచోఽంగారా
నాజ్యపాత్ర స్యోత్తరతో నిరూహ్య । ఆజ్యపాత్రం తేష్వధిశ్రిత్య ।
జ్వలతా తృణేన ప్రతిఫలీకృత్య । ద్వేదర్భాగ్రే ప్రచ్ఛిద్య ప్రక్షాళ్య
ప్రత్యస్య । ఆజ్య పాత్రే ప్రాస్య । దర్భేణ త్రిఃపర్యగ్ని కృత్వా ।
ఆజ్యాదిపాత్ర ముదగుద్వాస్య। తానంగారాన్ ప్రత్యూహ్య। ఉదగ
గ్రాభ్యాం పవిత్రాభ్యాం త్రిరుత్పూయ । ఆజ్యపాత్రం పురతోని
ధాయ । పవిత్రగ్రంథిం విస్సృజ్య। అపఉపస్పృశ్య। అగ్నౌ ప్రహృత్య।
స్రుక్స్రువానాదాయ । అగ్నౌ ప్రతితప్యదర్భైస్సంమృజ్య । పునః ప్రతి
తప్య । ప్రోక్షణపాత్రోదకేన ప్రోక్ష్య । దర్భానద్భి సగ్స్పృశ్య।
అగ్నౌ నిక్షిపేత్ । స్రువేణాజ్య మాదాయ। స్రుచి సంపూర్య। పున
స్స్రువేణాజ్య మాదాయ ఇంద్రాయనమః । ఇంద్రాయేదం । ప్రజా
పతయేనమః । ప్రజాపతయఇదం । పునస్స్రువేణా జ్యమాదాయ ।
స్రుచిసంపూర్య । ఈశాన్యదేశే అగ్నయేనమః అగ్నయఇదం । పున
స్స్రువే ణాజ్యమాదాయ । స్రుచిసంపూర్య । ఆగ్నేయదేశే సోమా
యేదంనమమ। తతః ప్రణవంవినా అకారంబిందుపూర్వం అష్టాక్షరం
ప్రత్యేక మేకైకాజ్యాహుతీ హుత్వా । నమోనారాయణాయ
నమః । మంత్రాక్షరాహుతీః క్రమః । అం అంనమ ఇత్యాదినాసుద
ర్శనాయ హేతిరాజాయనమః । పాంచజన్యాయ శంఖాధిపతయే
నమః । కౌమోదక్యై గదాధిపతయేనమః । నందకాయ ఖడ్గాధిపత

యేనమః । శార్ఙ్గాయ చాపాధిపతయేనమః । కౌస్తుభాయ మణిరాజాయనమః । అనంతాయ నాగరాజాయనమః । సమస్తముక్తజనావృతాయ శ్రీవిష్వక్సేనాయనమః । వేదాత్మకాయవైనతేయాయనమః । రత్నగోపురకుంభ స్తంభగంభీరాయ మణిమంటపాయనమః । ఆధారశక్తిసహితాయ దివ్యసింహాసనాయనమః । సర్వమంగళవిగ్రహాయ శ్రీమతేనారాయణాయ నమః॥

—• అథ వైకుంఠపార్షదనామాని •—

ఆధారశక్త్యైనమః । మూలప్రకృత్యైనమః । సకలజగదాధారాయ శ్రీకూర్మరూపిణేనమః। నారాయణాయనమః । సహస్రశీర్షాయనాగరాజాయనమః । భూమ్యైనమః। దివ్యవైకుంఠాయనమః। దివ్యలోకాయనమః । దివ్యజనపదాయనమః । దివ్యవిమానాయనమః। ఆనందాయనమః। మంటపరత్నాయనమః। అనంతాయనమః। నాగరాజాయనమః । అస్తరణభూతాయనమః । ధర్మాయనమః । జ్ఞానాయనమః । వైరాగ్యాయనమః । ఐశ్వర్యాయనమః। అధర్మాయనమః । అజ్ఞానాయనమః । అనైశ్వర్యాయనమః। అవైరాగ్యాయనమః । పీఠాత్మకాయనమః । సదాత్మకాయనమః । అనంతాయనమః । నాగరాజాయనమః । సూర్యమండలాయనమః । సోమమండలాయనమః । వహ్నిమండలాయనమః । విమలాయై చామరహస్తాయైనమః । ఉత్కర్షిణ్యై చామరహస్తాయైనమః । జ్ఞానాయై చామరహస్తాయైనమః । క్రియాయై చామరహస్తాయైనమః । యోగాయై చామరహస్తాయైనమః । ప్రహ్వ్యై చామరహస్తాయైనమః । సద్యాయైచామరహస్తాయైనమః । ఈశానాయై చామరహస్తాయైనమః । అనుగ్రహాయై చామరహస్తాయైనమః।జగత్ప్రకృత్యై యోగపీఠాయైనమః । దివ్యాయ యోగపర్యంకాయనమః । సమస్తపరివారాయ శ్రీమతేనారాయణాయనమః । శ్రియైనమః । భూమ్యైనమః । నీళా

క్షైనమః । కిరీటాయ మకుటాధిపతయేనమః । కిరీటమాలాయై ఆపీ డాత్మనేనమః । దక్షిణకుండలాయ మకరాత్మనేనమః । వామకుండ లాయ మకర్యాత్మనేనమః । హారాయ సర్వాభరణాధిపతయేనమః । కాంచీగుణోజ్జ్వలాయ పీతాంబరాయనమః । శ్రీవత్సాయ శ్రీనివా సాయనమః । శ్రీకౌస్తుభాయ దివ్యరత్నాధిపతయేనమః । పద్మాయ నమః । శ్రీమత్తులస్యైనమః । సర్వేభ్యో భగవద్భూషణేభ్యోనమః శ్రీపాదుకాభ్యాంనమః । గరుడాయనమః । జయత్సేనాయనమః । హరివక్త్రాయనమః । కాలప్రకృతిసంజ్ఞాయనమః । సర్వేభ్యో విష్వ క్సేనపరిజనేభ్యోనమః । చండాయ ద్వారపాలకాయనమః । ప్రచం డాయ ద్వారపాలకాయనమః । భద్రాయ ద్వారపాలకాయనమః। జయాయ ద్వారపాలకాయనమః । విజయాయ ద్వారపాలకాయ నమః । ధాత్రే ద్వారపాలకాయనమః । విధాత్రే ద్వారపాలకాయ నమః । కుముదాయ గణాధిపతయేనమః । సవాహనపరివారాయ ప్రహరణాయనమః। కుముదాక్షాయ గణాధిపతయే సవాహనపరివా రాయ ప్రహరణాయనమః । పుండరీకాయ గణాధిపతయే సవాహన పరివారాయ ప్రహరణాయనమః । వామనాయ గణాధిపతయేసవా హనపరివారాయ ప్రహరణాయనమః । శంఖకర్ణాయ గణాధిపతయే సవాహనపరివారాయ ప్రహరణాయనమః । సుముఖాయ గణాధి పతయే సవాహనపరివారాయ ప్రహరణాయనమః। సుప్రతిష్ఠితాయ గణాధిపతయే సవాహనపరివారాయ ప్రహరణాయనమః। సర్వేభ్యో భగవద్భక్తేభ్యోనమః । శ్రీవిష్ణవే పరమాత్మనేనమః॥ తూష్ణీంపరి షిచ్య॥ సంకల్ప్య పూర్వోక్త ఏవంగుణ విశేషణ విశిష్టాయా మస్యాం శుభతిథౌ । ...గోత్రోద్భవస్య ...నామధేయస్య। జన్మ ప్రభృత్యేతత్ క్షణ పర్యంతం। బాల్యయౌవన కౌమార వార్ధ కేషు జాగ్రత్స్వప్న సుషుప్త్యవస్థాసు । మనోవాక్కాయ కర్మేంద్రియ

వ్యాపారైః । రహసి ప్రకాశేచ । జ్ఞానతోఽ జ్ఞానతశ్చ కృతానాం
మహాపాత కాతిపాత కోపపాతక సమపాతక సంకరీకరణ మలినీ
కరణ జాతిభ్రంశకరణ అపాత్రీకరణ ప్రకీర్ణకాది నవవిధానాం పాపా
నాం । అత్యంతాభ్యస్తానాం నిరంతరాభ్యస్తానాం । చిరకాలాభ్య
స్తానాం । బహూనాం । బహువిధానాం సర్వేషాం పాపానాం। అప
నోదక ప్రాయశ్చిత్తం పరిషదుపస్థానపూర్వకం। శక్తిప్రత్యామ్నాయ
రూపేణాచరిష్యే॥ ఆర్ద్రవాససం దక్షిణాంచ గృహీత్వా సభాప్రద
క్షిణం కృత్వా॥ శ్లో॥ సమస్తసంప త్సమవాప్తిహేతవ । స్సముత్థి
తాపత్రతి ధూమకేతవః । అపారసంసార సముద్రసేతవః । పునంతు
మాం బ్రాహ్మణపాదపాంసవః॥ ఆపద్ఘనధ్వాంత సహస్రభానవ ।
స్సమీహితార్థార్పణ కామధేనవః॥ సమస్తతీర్థాంబు పవిత్రమూ
ర్తయో। రక్షంతు మాం బ్రాహ్మణ పాదపాంసవః॥ ఆధివ్యాధిహరం
నృణాంమృత్యుదారిద్ర్యనాశనం। శ్రీపుష్టికీర్తిదంవందే విప్రశ్రీ పాద
పంకజం॥ విప్రౌఘదర్శనా త్సద్యః క్షీయంతే పాపరాశయః। వంద
నాన్మంగళావాప్తి రర్చనా దచ్యుతం పదమ్॥ యాని కానిచ పాపాని
జన్మాంతర కృతానిచ। తాని తాని ప్రణశ్యంతి ప్రదక్షిణ పదేపదే॥
పాపోహం పాపకర్మాహం పాపాత్మా పాపసంభవః। త్రాహిమాం
కృపయా దేవ శరణాగతవత్సల॥ అన్యథా శరణం నాస్తి త్వమేవ
శరణం మమ। తస్మాత్కారుణ్యభావేన రక్ష రక్ష జనార్దన॥ ఆర్ద్ర
వాససం దక్షిణాంచ బ్రాహ్మణేభ్యో దద్యాత్॥

సుదర్శనపాంచజన్యయోః పంచామృతస్నపనంకృత్వా॥ ఇక్షో
స్సారంగవాంక్షీరం నారికేళం మధూనిచ। కదళీఫలసారంచ పంచా
మృత మిహోచ్యతే॥ అలంకృత్య । ఫలనైవేద్యందత్వా । నీరా
జనందత్వా । సుదర్శనపాంచజన్యౌ తప్తౌకృత్వా । కంకణబంధమ్॥
అశ్వత్థపత్రం శుభకంకణంవా । పిశాచ యక్షాఽసురరక్షకంకణం।

లక్ష్మీనృసింహస్య కటాక్ష కంకణం । కరోమి దంపత్యభివృద్ధి కంక
ణం॥ ఇతికౌతుక సూత్రమాబధ్య॥ యత్త్వగస్థిగతంపాపం దేహే
తిష్ఠతి మామకే । ప్రాశనం పంచగవ్యస్య దహత్వగ్ని రివేంధనమ్॥
ఇతి మంత్రేణ శిష్యం పంచగవ్యం ప్రాశయిత్వా । ఆత్మనోదక్షిణే
భాగే నివేశ్యో దఙ్ముఖంతతః । ఆబధ్య కౌతుకం హస్తే మంత్రేణా
నేన గోపయేత్॥ రక్షరక్ష జగన్నాథ రామనాథ దయానిధే। విక్ర
మత్రయవిక్రాంత జగత్త్రయనమోస్తుతే॥ సహస్రాంశోసహస్రార
జ్వాలామాలిన్సుదర్శన । తాపత్రయ విమూఢస్య సందర్శయహరేః
పదం॥ సుదర్శన మహాజ్వాల కోటిసూర్యసమప్రభ । అజ్ఞానాంధస్య
మేనిత్యం విష్ణోర్మార్గం ప్రదర్శయ॥ ఇతి శిష్యంవాచయిత్వాచక్రేణ
శిష్యస్య దక్షిణభుజే న్యసేత్॥ నిజగంభీర నిధ్వాన నిరస్తాశేషదా
నవ । పాంచజన్య భవాంభోధిపతితం మాంసముద్ధర॥ పాంచజన్య
నిజధ్వాన ధ్వస్తపాతక సంచయ । పాహిమాం పాపినంఘోరం సం
సారార్ణవపాతినమ్॥ ఇతి శిష్యంవాచయిత్వా శంఖేన శిష్యస్యవామ
బాహౌన్యసేత్ । తతః కలశోదకేన సుదర్శన పాంచజన్యౌ సం
ప్రోక్ష్య। పునఃపంచామృతస్నపనంకృత్వా। అనంతరం కేశవాదిక్రమేణ
ఊర్ధ్వపుండ్రాణి ధారయిత్వా। దాస్యనామ దత్వా। యథాధికారం
విష్ణుపూజాంనిజోచితాచారంచఉపదిశేత్ । తతఃఆచార్యాయనమః॥
హితప్రదాయనమః । శ్రీమతేనమః । కేశవాయనమః । ఇత్యాది
శ్రీకృష్ణాయనమః। ఏవం సర్వోపచారై రభ్యర్చ్య తతః ఆచార్యః
శిష్యదక్షిణకర్ణే గురుపరంపరాపూర్వకంమంత్రోపదేశం కుర్యాత్।
తదనంతరం శిష్యః ఆచార్యం భూషణాంబర యాన ధనధాన్యరత్న
భూగ్రామాదిభిః యథాశక్తి సంపూజయేత్॥ తతః ఆచార్యపాదౌ
చందనాదినా విలిప్య సువర్ణపుష్పైః పూజయేత్ । తతః సుదర్శన
పాంచజన్యయోః పంచామృతస్నపనంకృత్వా ఫలనైవేద్యం దత్వా

నిజస్థానం ప్రాపయేత్ । తతః కర్మసమృద్ధ్యర్థం కేశవాది హోమం కుర్యాత్ ॥

వశిష్ఠః॥ శ్లో॥ హోమపూర్వం ప్రకుర్వీత శూద్రాదీనాంతు సర్వతః । చరుమిధ్మం వేదమంత్రం వర్జయే త్పరిషేచనం। నమోంత మేవ హూయేత స్వాహాకారంతు వర్జయేత్ ॥

తతః అగ్నిముద్వాస్య॥ నమస్తే గార్హ పత్యాయ నమస్తే దక్షిణాగ్నయే। నమఆనహనీయాయ యజ్ఞేశాయనమోనమః। కాం డద్వయోపపద్యాయ కర్మబ్రహ్మస్వరూపిణే । స్వర్గాపవర్గరూపాయ యజ్ఞేశాయనమోనమః॥ యజ్ఞేశాచ్యుత గోవింద మాధవానంత కేశవ । కృష్ణవిష్ణో హృషీకేశ వాసుదేవ నమోస్తుతే॥ ఇతి శ్రీవిష్వ క్సేనసంహితాయాం శూద్రాదీనాం పంచసంస్కారవిధిః॥

పురాణోక్త సమాశ్రయణవిధిః॥

స మా ప్తా.

---

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# ముహూర్తనిర్ణయః.

——:o:——

చక్రాంకణయోగ్య, నిషేధ, మాస, తిథి, వార, నక్షత్ర, యోగ, లగ్న, నిర్ణయః॥ శ్లో॥ మాఖద్వయేమాధవ శుక్లకార్తికే సుశ్రావణే మార్గశిరోదయాంతే । ఆచార్యపూజ్యంచ సుముద్రధారణం ఆయుష్యమారోగ్యయశస్కరంచ॥ మాఖాదిపంచకే మాసే శ్రావణే కార్తికద్వయే । ఇతరేషుచ మాసేషు నకుర్యాన్ముద్రధారణం॥ ద్వితీయాచ తృతీయాచ పంచమీ సప్తమీతథా । దశమ్యాంచత్రయోదశ్యాం పౌర్ణమ్యాంగురువాసరే॥ ఇందుసౌమ్య భృగూశ్చైవఅన్యవారే విసర్జయేత్ । వక్తా ప్రాఙ్ముఖమాసీనః శ్రోతాచోదఙ్ముఖోభవేత్॥ సింహ వృశ్చిక కుంభేషు వృషేమీనే తథైవచ। తులాయాం కర్కటే లగ్నే ముద్రారంభః ప్రశస్యతే॥ హస్తాదిత్రయ వైష్ణవా నవ మఖ బ్రహ్మేందు పుష్యాశ్వినీ । పౌష్ణాదిత్య పురందరేషు శుభకృన్మూలోత్తరాచ త్రయే। చంద్రార్కామర పూజ్య భార్గవబుధా వారేచపూర్ణేతిథౌ। ముద్రాధారణమాచరేత్ భగవత శ్రీశంఖచక్రాంకణమ్॥ జన్మర్క్షే జన్మలగ్నేచ జన్మవారే తిథౌతథా । జన్మచంద్రే జన్మమాసే శుభదం ముద్రధారణం॥ బోధాయనసూత్రే :— శ్లో॥ చైత్రే దుఃఖాయ దీక్షాస్యా ద్వైశాఖే సర్వసిద్ధిదా । జ్యేష్ఠే మృత్యుప్రదాతాస్యాత్ ఆషాఢే బంధునాశనం॥ శ్రావణే వృద్ధిదంనౄణాం నభస్యే దుఃఖమాప్నుయాత్ । ఆశ్వినే సర్వసిద్ధిస్స్యా త్కార్తికేజ్ఞానవృద్ధిదా । శుభదా మార్గశీర్షేచ పౌషే మేధావినాశనీ । మాఖే సువర్ణ లాభస్స్యాత్ఫాల్గుణే సర్వసిద్ధిదా॥ నారదీయే :— "మలమాసే విసర్జయేది" తి॥ శ్లో॥ రవివారే భవేద్విత్తం సోమే శాంతిర్భవేత్కిల। ఆయు రంగారకేహంతి తత్రదీక్షాంచ వర్జయేత్॥ బుధే సౌందర్యమాప్నోతిజ్ఞానం శాంతం బృహస్పతౌ। శుక్రే సౌభాగ్య మాప్నోతి యశోహానిశ్శనైశ్చరే॥ గ్రంథాంతరే :—శ్లో॥ అవిద్యాసోమకేభవేత్॥ ప్రతిపత్తౌకృతాదీక్షా జ్ఞాననాశకరీ భవేత్ । ద్వితీయాయాం భవేద్జ్ఞానం తృతీ

యాదయాం భవేత్సుఖం। చతుర్థ్యాం ధననాశస్స్యా త్పంచమ్యాం బుద్ధివర్ధనీ। షష్ఠ్యాం జ్ఞానమతీ సౌఖ్యం లభతే సప్తమేదినే। అష్ట మ్యాం జ్ఞాననాశంస్యా న్నవమ్యాంచ నపుంసకం। దశమ్యాం రాజసౌభాగ్య మేకాదశ్యాం శుచిర్భవేత్। ద్వాదశ్యాం సర్వసిద్ధిస్స్యా దనాధ్యాయే వివర్జయేత్॥ అథ నక్షత్రాణి:— శ్లో॥ అశ్విన్యాం సుఖమాప్నోతి భరణ్యాం మరణం ధ్రువం। కృత్తికాయాం భవేద్దుః ఖంరోహిణ్యాం వాక్పతిర్భవేత్। మృగశీర్షేతుదుఃఖంస్యాత్ ఆర్ద్రా యాం ధననాశనం। పునర్వసౌ ధనంధాన్యం పుష్యే శత్రువినాశనం। ఆశ్లేషాయాం భవేన్మృత్యు ర్మఖాయాం దుఃఖమోచనం। సౌం దర్యం పూర్వఫల్గున్యాం ప్రాప్నోతిచ నసంశయః। జ్ఞానం చోత్తర ఫల్గున్యాం హస్తాయాంచ బలీభవేత్। చిత్రాయాం జ్ఞానసిద్ధిస్స్యా త్స్వాత్యాం శత్రువినాశనం। విశాఖాయాంతు దుఃఖాయాంఽనూ రాధా బుద్ధివర్ధనం। జ్యేష్ఠాయాం శుభమాప్నోతిమూలేసర్వసమృద్ధి కృత్। పూర్వాషాఢోత్తరాషాఢే భవేతాం కీర్తిదాయకే। శ్రవ ణాయాం భవేద్దుఃఖం ధనిష్ఠాయాందరిద్రతా। బుద్ధిశ్శతభిషాయాంతు పూర్వాభాద్రి సుఖీభవేత్। సౌఖ్యం చోత్తరభాద్రాయాం రేవ త్యాం కీర్తివర్ధనమ్॥ యోగశ్చప్రీతిరాయుష్మాన్ శకున్యాదీనివృద్ధించ విశేషేణ వివర్జయేత్। అత్రాదిపదేన కింతుఘ్నంచ చతుష్పాన్నా గహానాం గ్రహణమ్॥ అథ రాశయస్తు వైశంపాయన సంహితా యాం:— శ్లో॥ మంత్రాద్యారంభణం మేషే ధనధాన్యప్రదం భవేత్। వృషే మరణమాప్నోతి మిథునే పత్నినాశనం। కర్కటే సర్వసిద్ధిస్స్యా త్సింహే మేధావినాశనం। కన్యా లక్ష్మీప్రధానత్వం తులాయాం సర్వసిద్ధయః। వృశ్చికే స్వర్ణ లాభస్స్యా ద్ధను జ్ఞాన వినాశనం। మకరే పుత్రదః ప్రాహుః కుంభే ధనసమృద్ధిదః। మీనే సుపుత్రవాన్నిత్య మేవం రాశిఫలం స్మృతమ్॥

ఇ తి ము హూ ర్త ని ర్ణ య ః.